# श्रीगौराङ्गस्तवकल्पतरुः ।

गतिं दृष्ट्वा यस्य प्रमद–गजवर्येऽखिल–जना
मुखं च श्रीचन्द्रोपरि दधति थूत्कार–निवहम् ।
स्वकान्त्या यः स्वर्णाचलमधरयच्छीधु च वच-
स्तरंगैर्गौराङ्गो हृदय उदयन्मां मदयति ॥ १ ॥

अलंकृत्यात्मानं नव–विविध–रत्नैरिव वलद्-
विवर्णत्व–स्तम्भास्फुट–वचन–कम्पाश्रु–पुलकैः ।
हसन् स्विद्यन्नृत्यन् शितिगिरि–पतेर्निर्भरमुदे
पुरः श्रीगौराङ्गो हृदय उदयन्मां मदयति ॥ २ ॥

रसोल्लासैस्तिर्यग्गतिभिरभितो वारिभिरलं
दृशोः सिञ्चँल्लोकानरुण–जलयंत्रत्वमितयोः ।
मुदा दन्तैर्दष्ट्वा मधुरमधरं कम्प–चलितै-
र्नटन् श्रीगौराङ्गो हृदय उदयन्मां मदयति ॥ ३ ॥

क्वचिन्मिश्रावासे व्रजपति–सुतस्योरु–विरहात्
श्लथच्छ्रीसन्धित्वाद्दधदधिक–दैर्घ्यं भुजपदोः ।
लुठन् भूमौ काक्वा विकल–विकलं गद्गदवचा
रुदन् श्रीगौराङ्गो हृदय उदयन्मां मदयति ॥ ४ ॥

अनुद्घाट्य द्वारत्रयमुरु च भित्तित्रयमहो
विलंघ्योच्चैः कालिङ्गिक-सुरभि-मध्ये निपतितः ।
तनूद्यत्–सङ्कोचात् कमठ इव कृष्णोरु–विरहाद्-
विराजन् गौराङ्गो हृदय उदयन्मां मदयति ॥ ५ ॥

स्वकीयस्य प्राणार्बुद–सदृश–गोष्ठस्य विरहात्
प्रलापानुन्मादात् सततमति कुर्वन् विकलधीः ।

दधद्भित्तौ शश्वद्वदन-विधु-घर्षेण रुधिरं
क्षतोत्थं गौराङ्गो हृदय उदयन्मां मदयति ॥ ६ ॥

क्व मे कान्तः कृष्णस्त्वरितमिह तं लोकय सखे
त्वमेवेति द्वाराधिपमभिदधन्नुन्मद इव ।
द्रुतं गच्छ द्रष्टुं प्रियमिति तदुक्तेन धृत-तद्-
भुजान्तो गौराङ्गो हृदय उदयन्मां मदयति ॥ ७ ॥

समीपे नीलाद्रेश्चटकगिरिराजस्य कलना-
दये गोष्ठे गोवर्धनगिरिपतिं लोकितुमितः ।
व्रजन्नस्मीत्युक्त्वा प्रमद इव धावन्नवधृतो
गणैः स्वैर्गौराङ्गो हृदय उदयन्मां मदयति ॥ ८ ॥

अलं दोलाखेला-महसि वर-तन्मण्डप-तले
स्वरूपेण स्वेनापर-निजगणेनापि मिलितः ।
स्वयं कुर्वन्नाम्नामति-मधुरगानं मुरभिदः
सरङ्गो गौराङ्गो हृदय उदयन्मां मदयति ॥ ९ ॥

दयां यो गोविन्दे गरुड इव लक्ष्मीपतिरलं
पुरीदेवे भक्तिं य इव गुरुवर्ये यदुवरः ।
स्वरूपे यः स्नेहं गिरिधर इव श्रील-सुबले
विधत्ते गौराङ्गो हृदय उदयन्मां मदयति ॥१०॥

महा-सम्पद्दारादपि पतितमुद्धृत्य कृपया
स्वरूपे यः स्वीये कुजनमपि मां न्यस्य मुदितः ।
उरोगुञ्जाहारं प्रियमपि च गोवर्धनशिलां
ददौ मे गौराङ्गो हृदय उदयन्मां मदयति ॥११॥

इति श्रीगौराङ्गोद्गत–विविध–सद्भाव–कुसुम-
प्रभाभ्राजत्-पद्यावलि-ललितशाखं सुरतरुम् ।
मुहुर्योऽतिश्रद्धौषधिवर–बलत्–पाठसलिलै-
रलं सिञ्चेद् विन्देत् सरस-गुरुतल्लोकनफलम् ॥१२॥

इति श्रीमद्रघुनाथदासगोस्वामि–विरचित स्तवावल्याँ
श्रीगौराङ्गस्तवकल्पतरुः समाप्तः ।

# श्रीगोद्रुमचन्द्रभजनोपदेशः ।

तोटकम् ।

यदि ते हरिपादसरोजसुधा-रसपानपरं हृदयं सततम् ।
परिहृत्य गृहं कलिभावमयं भज गोद्रुमकाननकुञ्जविधुम् ॥ १ ॥

धन-यौवन-जीवन-राज्य-सुखं न हि नित्यमनुक्षणनाशपरम् ।
त्यज ग्राम्यकथासकलं विफलं भज गोद्रुमकाननकुञ्जविधुम् ॥ २ ॥

रमणीजनसङ्गसुखं च सखे चरमे भयदं पुरुषार्थहरम् ।
हरिनाम-सुधारस-मत्तमतिर्भज गोद्रुमकाननकुञ्जविधुम् ॥ ३ ॥

जडकाव्यरसो न हि काव्यरसः कलिपावन-गौररसो हि रसः ।
अलमन्यकथाद्यनुशीलनया भज गोद्रुमकाननकुञ्जविधुम् ॥ ४ ॥

वृषभानुसुतान्वितवामतनुं यमुनातटनागरनन्दसुतम् ।
मुरलीकलगीत–विनोदपरं भज गोद्रुमकाननकुञ्जविधुम् ॥ ५ ॥

हरिकीर्तनमध्यगतं स्वजनैः परिवेष्टित–जाम्बुनदाभहरिम् ।
निज-गौडजनैक-कृपाजलधिं भज गोद्रुमकाननकुञ्जविधुम् ॥ ६ ॥

इति श्रीगौराङ्गोद्गत-विविध-सद्भाव-कुसुम-
प्रभाभ्राजत्-पद्यावलि-ललितशाखं सुरतरुम् ।
मुहुर्योऽतिश्रद्धौषधिवर-बलत्-पाठसलिलै-
रलं सिञ्चेद् विन्देत् सरस-गुरुतल्लोकनफलम् ॥१२॥

इति श्रीमद्रघुनाथदासगोस्वामि-विरचित स्तवावल्याँ
श्रीगौराङ्गस्तवकल्पतरुः समाप्तः ।

# श्रीगोद्रुमचन्द्रभजनोपदेशः ।

तोटकम् ।

यदि ते हरिपादसरोजसुधा-रसपानपरं हृदयं सततम् ।
परिहृत्य गृहं कलिभावमयं भज गोद्रुमकाननकुञ्जविधुम् ॥ १ ॥

धन-यौवन-जीवन-राज्य-सुखं न हि नित्यमनुक्षणनाशपरम् ।
त्यज ग्राम्यकथासकलं विफलं भज गोद्रुमकाननकुञ्जविधुम् ॥ २ ॥

रमणीजनसङ्गसुखं च सखे चरमे भयदं पुरुषार्थहरम् ।
हरिनाम-सुधारस-मत्तमतिर्भज गोद्रुमकाननकुञ्जविधुम् ॥ ३ ॥

जडकाव्यरसो न हि काव्यरसः कलिपावन-गौररसो हि रसः ।
अलमन्यकथाद्यनुशीलनया भज गोद्रुमकाननकुञ्जविधुम् ॥ ४ ॥

वृषभानुसुतान्वितवामतनुं यमुनातटनागरनन्दसुतम् ।
मुरलीकलगीत-विनोदपरं भज गोद्रुमकाननकुञ्जविधुम् ॥ ५ ॥

हरिकीर्तनमध्यगतं स्वजनैः परिवेष्टित-जाम्बुनदाभहरिम् ।
निज-गौडजनैक-कृपाजलधिं भज गोद्रुमकाननकुञ्जविधुम् ॥ ६ ॥

गिरिराजसुतापरिवीतगृहं नवखण्डपतिं यतिचित्तहरम् ।
सुरसङ्घनुतं प्रियया सहितं भज गोद्रुमकाननकुञ्जविधुम् ॥ ७ ॥

कलिकुक्कुर–मुद्गरभावधरं हरिनाममहौषध–दानपरम् ।
पतितार्तदयार्द्र–सुमूर्तिधरं भज गोद्रुमकाननकुञ्जविधुम् ॥ ८ ॥

रिपुबान्धवभेदविहीनदया यदभीक्ष्णमुदेति मुखाब्जततौ ।
तमकृष्णमिह व्रजराजसुतं भज गोद्रुमकाननकुञ्जविधुम् ॥ ९ ॥

इह चोपनिषत्–परिगीतविभुर्द्विजराजसुतः पुरटाभहरिः ।
निजधामनि खेलति बन्धुयुतो भज गोद्रुमकाननकुञ्जविधुम् ॥१०॥

अवतारवरं परिपूर्णकलं परतत्त्वमिहात्मविलासमयम् ।
व्रजधामरसाम्बुधि-गुप्तरसं भज गोद्रुमकाननकुञ्जविधुम् ॥११॥

श्रुतिवर्णधनादि न यस्य कृपाजनने बलवद् भजनेन विना ।
तमहैतुकभावपथा हि सखे भज गोद्रुमकाननकुञ्जविधुम् ॥१२॥

अपि नक्रगतौ ह्रदमध्यगतं कममोचयदार्तजनं तमजम् ।
अविचिन्त्यबलं शिवकल्पतरुं भज गोद्रुमकाननकुञ्जविधुम् ॥१३॥

सुरभीन्द्रतपःपरितुष्टमना वरवर्णधरो हरिराविरभूत् ।
तमजस्त्रसुखं मुनिधैर्यहरं भज गोद्रुमकाननकुञ्जविधुम् ॥१४॥

अभिलाषचयं तदभेदधियमशुभं च शुभं त्यज सर्वमिदम् ।
अनुकूलतया प्रियसेवनया भज गोद्रुमकाननकुञ्जविधुम् ॥१५॥

हरिसेवक–सेवनधर्मपरो हरिनामरसामृतपानरतः ।
नति-दैन्य-दया-परमानयुतो भज गोद्रुमकाननकुञ्जविधुम् ॥१६॥

वद यादव माधव कृष्ण हरे वद राम जनार्दन केशव हे ।
वृषभानुसुता-प्रियनाथ सदा भज गोद्रुमकाननकुञ्जविधुम् ॥१७॥

वद यामुनतीरवनाद्रिपते वद गोकुलकाननपुञ्जरवे ।
वद रासरसायन गौरहरे भज गोद्रुमकाननकुञ्जविधुम् ॥१८॥

चल गौरवनं नवखण्डमयं पठ गौरहरेश्चरितानि मुदा ।
लुठ गौरपदाङ्कित-गाङ्गतटं भज गोद्रुमकाननकुञ्जविधुम् ॥१९॥

स्मर गौरगदाधरकेलिकलां भव गौरगदाधरपक्षचरः ।
शृणु गौरगदाधरचारुकथां भज गोद्रुमकाननकुञ्जविधुम् ॥२०॥

इति श्रीमद्सच्चिदानन्द-भक्तिविनोद-ठक्कुर-विरचितं
श्रीगोद्रुमचन्द्रभजनोपदेशः संपूर्णम् ।

# श्रीचैतन्यशतकम् ।

प्रणम्य त्वां प्रभो गौर तव पादे शतं ब्रुवे ।
सदाशयानां साधूनां सुखार्थं मे कृपां कुरु ॥ १ ॥

श्रीराधाकृष्णयोः सेवां स्थापयित्वा गृहे गृहे ।
श्रीमत्संकीर्तने गौरो नृत्यति प्रेमविह्वलः ॥ २ ॥

जिह्वायां हरिनामसाधनमहो धाराशतं नेत्रयोः
सर्वाङ्गे पुलकोद्गमो निरवधि स्वेदश्च विभ्राजते ।
श्रीमद्गौरहरेः प्रगल्भ-मधुराभक्ति-प्रदातुर्जनैः
सेवा श्रीव्रजयोषितामनुगता नित्या सदा शिक्ष्यते॥ ३ ॥

कलिमल-पतितानां शोकमोहावृतानां
निजजन-पतिसेवा-वित्तचिन्ताकुलानाम् ।
इति समजनि गौरस्त्राण-हेतुं विचिन्त्य
प्रकट-मधुर-देहो नामदाता कृपालुः ॥ ४ ॥

श्रीश्रीमत्कृष्णचैतन्ये जगत्त्राणैक-कर्तरि ।
यो मूढे भक्तिहीनः स्यात् पच्यते नरके ध्रुवम् ॥ ५ ॥

यः कृष्णो राधया कुञ्जे विलासं कृतवान् पुरा ।
गदाधरेण संयुक्तः स गौरो वसते भुवि ॥ ६ ॥

संसार सर्पदष्टानां मूर्छितानां कलौ युगे ।
औषधं भगवन्नाम श्रीमद्वैष्णव-सेवनम् ॥ ७ ॥

विषयाविष्ट-मूर्खाणां चित्तसंस्कारमौषधम् ।
विश्रंभेण गुरोः सेवा वैष्णवोच्छिष्ट-भोजनम् ॥ ८ ॥

वन्दे श्रीकरुणासिन्धुं श्रीचैतन्यं महाप्रभुम् ।
कृपां कुरु जगन्नाथ! तव दास्यं ददस्व मे ॥ ९ ॥

दास्यं ते कृपया नाथ! देहि देहि महाप्रभो !
पतितानां प्रेमदाताऽऽस्यतो याचे पुनःपुनः ॥१०॥

संसारसागरे मग्नं पतितं त्राहि मां प्रभो ।
दीनोद्धारे समर्थस्त्वमतस्ते शरणं गतः ॥११॥

जगतां त्राणकर्तासि भर्ता दातासि संपदाम् ।
त्राणं कुरुष्व भो नाथ! दास्यं देहि शचीसुत ! ॥१२॥

सर्वेपामवताराणां पुराणैर्यत् श्रुतं फलम् ।
तस्मान्मे निष्कृतिर्नास्ति अतस्ते शरणं गतः ॥१३॥

विचित्र-मधुराक्षर-श्रुतिमनोज्ञ-गीतो मुदा
स्वभक्तगणमण्डली-रचित-मध्यगामी प्रभुः ।
मनोहर-मनोहरो नटति गौरचन्द्रः स्वयं
जगत्त्रय-विभूषणो परमधाम-नीलाचले ॥१४॥

विलोक्य पुरुषोत्तमं कनकगौरदेहो हरि-
मुदा हृदयपङ्कजे जलदकान्तिमालिङ्गितुम् ।
पपात धरणीतले सकलभाव-संमूर्छितः
कदाचिदपि नेङ्गते परमधारि संस्पन्दनम् ॥१५॥

गौरस्य नयने धारा सगद्गद-वचो मुखे ।
पुलकाङ्कित-सर्वाङ्गो भावे लुठति भूतले ॥१६॥

चैतन्यचरणांभोजे यस्यास्ति प्रीतिरच्युता ।
वृन्दाटवीशयोस्तस्य भक्तिस्याच्छत--जन्मनि ॥१७॥

यथा राधापदांभोजे भक्तिः स्यात् प्रेमलक्षणा ।
तथैव कृष्णचैतन्ये वर्धते मधुरा रतिः ॥१८॥

कनक--मुकुरकान्तिं चारुवक्त्रारविन्दं
मधुर--मुकुर हास्यं पक्वबिंबाधरोष्ठम् ।
सुवलित--ललिताङ्गं कम्बुकण्ठं नटेन्द्रं
त्रिभुवन--कमनीयं गौरचन्द्रं प्रपद्ये ॥१९॥

सुदीर्घ--सुमनोहरं मधुरकान्ति--चन्द्राननं
प्रफुल्लकमलेक्षणं दशनपंक्ति--मुक्ताफलम् ।
सुपुष्प--नवमञ्जरी--श्रवणयुग्म--सद्भूषणं
प्रदीप्त--मणिकङ्कणं कषित--हेमगौरं भजे ॥२०॥

अखिल--भुवनबन्धो प्रेमसिन्धो जनेऽस्मिन्
सकल कपटपूर्णे ज्ञानहीने प्रपन्ने ।
तव चरणसरोजे देहि दास्यं प्रभो त्वं
पतिततरण--नाम प्रादुरासीत् यतस्ते ॥२१॥

ऊर्ध्वीकृत्य भुजद्वयं करुणया सर्वान् जनानादिशेत्
रे रे भागवता हरिं वद वद श्रीगौरचन्द्रः स्वयम् ।

प्रेम्णा नृत्यति हुंकृतिं विकुरुते हा हा रवैर्व्याकुलो
भूमौ लुण्ठति मूर्छति स्वहृदये हस्तौविनिक्षिप्यति ॥२२॥

हरेकृष्णरामनाम-गान--दान--कारिणीं
शोकमोहलोभताप सर्वविघ्ननाशिनीम् ।
पादपद्मलुब्ध--भक्तवृन्द--भक्तिदायिनीं
गौरमूर्तिमाशु नौमि नाम सूत्रधारिणीम् ॥२३॥

मालती--मल्लिका--दामबद्ध--कुञ्चित--कुन्तलम् ।
भालोद्यत्तिलकं गण्ड--रत्नकुण्डलमण्डितम् ॥२४॥

श्रीखण्डागुरुलिप्ताङ्गं कङ्कणाङ्गद भूषितम् ।
क्वणन्--मञ्जीर--चरणं गौरचन्द्रमहं भजे ॥२५॥

मधुरं मधुरं कनकाभ-तनुमरुणाम्बर-सत्परिधेयमहो ।
जगदेक-शुभं सकलैक-परं करुणप्रवणं भज तं परमम् ॥२६॥

कृष्णरूपं परित्यज्य कलौ गौरो बभूव यः ।
तं वन्दे परमानन्दं श्रीचैतन्य--महाप्रभुम् ॥२७॥

पीतांशुकं परित्यज्य शोणाम्बरं धरोति यः ।
तं गौरं करुणासिन्धुमाश्रये भुवनाश्रयम् ॥२८॥

अवतीर्णः पुनः कृष्णो गौरचन्द्रः सनातनः ।
मग्नाखिभाग--पापेस्मिन् तेषां त्राणस्य हेतवे ॥२९॥

अवतीर्णे कलौ गौरे चण्डालाद्याः कुजातयः ।
यावन्तः पापिनश्चापि प्रायशो वैष्णवा अमी ॥३०॥

पतितं दुर्गतं दृष्ट्वा वैष्णवा लोकपावनाः ।
करौ धृत्वा हरेर्नाम याचन्ति कृपया कलौ ॥३१॥

संकीर्तनारंभ--कृतेऽपि गौरे
धावन्ति जीव--श्रवणे गुणानि ।
अशुद्ध--चित्ताः किमु शुद्धचित्ताः
श्रुत्वा प्रमत्ताः खलु ते ननर्तुः ॥३२॥

किमाश्चर्यं किमाश्चर्यं कलौ जाते शचीसुते ।
स्त्री--बाल--जडमूर्खाद्याः सर्वे नामपरायणाः ॥३३॥

चाण्डाला यवना मूर्खाः सर्वे कुर्वन्ति कीर्तनम् ।
हरेर्नाम्नां गुणानां च गौरे जाते कलौ युगे ॥३४॥

किमद्भुतं गौरहरेश्चरित्रं
ततोऽधिकं तत्प्रिय--सेवकानाम् ।
संकीर्तनामोद--जनानुराग-
प्रेमप्रदानं वितनोति लोके ॥३५॥

सुवलितमणिमालैर्बद्धचूडं मनोज्ञं
सुललित--मृदुभाले--चन्दनेनानुचित्रम् ।
श्रवणयुगलरन्ध्रे कुण्डलौ यस्य भातौ
हृदिविनिहितहारं नौमि तं गौरचन्द्रम् ॥३६॥

चैतन्यरूपगुणकर्म--मनोज्ञवेशं
यः सर्वदा स्मरति देहमनोवचोभिः ।
तस्यैव पादतल--पद्म--रजोऽभिलाषी
सेवां करोमि शतजन्मनि बन्धुपुत्रैः ॥३७॥

इयं रसज्ञा तव नाम कीर्तने
श्रोत्रौ मनो मे श्रवणेऽनुचिन्तने ।

नेत्रे च ते रूप निरीक्षणे सदा
शिरोऽस्तु चैतन्य पदाभिवन्दने ॥३८॥

संकीर्तनानन्द--रसस्वरूपाः
प्रेमप्रदानैः खलु शुद्धचित्ताः ।
सर्वे महान्तः किल कृष्णतुल्याः
संसार--लोकान् परितारयन्ति ॥३९॥

यस्मिन् देशे कुलाचारो धर्माचारश्च नास्ति वै ।
तथापि धन्यस्तद्देशो नामसंकीर्त्तनाद्धरेः ॥४०॥

यावतां च कुतंत्राणां समुद्धारस्य हेतवे ।
अवतीर्णः कलौ कृष्णचैतन्यो जगतां पतिः ॥४१॥

सर्वावतारा भजतां जनानां
त्रातुं समर्थाः किल साधुवार्ता ।
भक्तानभक्तानपि गौरचन्द्र-
स्ततार कृष्णामृतनाम--दानैः ॥४२॥

चैतन्यः प्रेमदाताखिलभुवन-
जनान् भावहुङ्कारनादै-
र्गोविन्दाकृष्टचित्तान् कुविषय-
विरतान् कारयामास शीघ्रम् ।
एवं श्रीगौरचन्द्रे जगति च
जनिते वञ्चितो यो हि मूर्ख-
स्तापी पापी सुरापी हरिगुरु-
विमुखः सर्वदा वञ्चितः सः ॥४३॥

त्रिभुवनकमनीये गौरचन्द्रेऽवतीर्णे
पतित--यवनमूर्खाः सर्वथा स्फोटयन्तः ।

इह जगति समस्ता नामसंकीर्तनार्ता
वयमपि च कृतार्थाः कृष्णनामाश्रयाद्धोः ॥४४॥

मधुर मधुर मेतद्वैष्णवानां चरित्रं
कलिमल-कृतहीनान् दोषबुद्ध्या न जग्मुः ।
सकल--निगमसारं नामदातुं च तत्र
प्रबल--करुणया श्रीगौरचन्द्रोऽवतीर्णः ॥४५॥

लोकान् समस्तान् कलिदुर्गवारिधे-
र्नाम्ना समुत्तार्य स्वतः समर्पितम् ।
श्रीगौरचन्द्रैर्हरि वैष्णवानां
नाम्नश्च तत्त्वं कथितं जने जने ॥४६॥

यावन्तो वैष्णवा लोके परित्राणस्य हेतवे ।
रटन्ति प्रभुणादिष्टा देशे देशे गृहे गृहे ॥४७॥

जगद्बन्धोर्जगत्कर्तुर्जगतां त्राणहेतवे ।
यत्र तत्र हरेः सेवा--कीर्तने स्थापिते सुखे ॥४८॥

गौराङ्गः प्रेममूर्तिर्जगति यदवधि प्रेमदानं करोति
पापी तापी सुरापी निखिलजनधनस्यापहारी कृतघ्नः ।
सर्वान् धर्मान् स्वकीयान् विषमिव
विषयं संपरित्यज्य कृष्णं
गायन्त्युच्चैः प्रमत्तास्तदवधि
विकलाः प्रेमसिन्धौ निमग्नाः ॥४९॥

येषां कस्मिन् कलियुगे नोद्धारो बहुजन्मसु ।
कलौ ते ते सुखे मग्ना नामगान--प्रसादतः ॥५०॥

हरेर्नाम्नां प्रसादेन निस्तरेत् पातकीजनः ।
उपदेष्टा स्वयं कृष्णचैतन्यो जगदीश्वरः ॥५१॥

अखिल--भुवनबन्धुर्नामदाता कृपालुः
कषित--कनकवर्णः सर्वमाधुर्य--पूर्णः ।
अतिसुमधुरहासः स्निग्धदृक् प्रेमभासः
स्फुरतु हृदयमध्ये गौरचन्द्रो नटेन्द्रः ॥५२॥

अतिमधुरचरित्रः कृष्णनामैकमंत्रो
भुवनविदित--सर्वप्रेमदाता नितान्तः ।
विपुल--पुलकधारी चित्तहारी जनानां
स्फुरतु हृदयमध्ये गौरचन्द्रो नटेन्द्रः ॥५३॥

सकलनिगमसारः पूर्ण--पूर्णावतारः
कलि--कलुष--विनाशः प्रेमभक्तिप्रकाशः ।
प्रियसहचरसङ्गे रङ्गभंग्या विलासी
स्फुरतु हृदयमध्ये गौरचन्द्रो नटेन्द्रः ॥५४॥

जगदतुलमनोज्ञो नाटचलीलाभिविज्ञः
कलितमधुरवेशो मूर्छिताशेषदेशः ।
प्रबल--गुण--गभीरः शुद्धसत्त्वस्वभावः
स्फुरतु हृदयमध्ये गौरचन्द्रो नटेन्द्रः ॥५५॥

निरवधि गलदश्रुः स्वेदयुक्तः सकम्पः
पुलकवलितदेहः सर्वलावण्यगेहः ।
मनसिजशतचित्त--क्षोभकारी यशस्वी
स्फुरतु हृदयमध्ये गौरचन्द्रो नटेन्द्रः ॥५६॥

शमनदमन--नाम--कृष्णनाम--प्रदानः
परम--पतित--दीन--त्राणकारण्यसीमः ।
व्रजविपिनरहस्य--प्रोल्लसच्चारुगात्रः
स्फुरतु हृदयमध्ये गौरचन्द्रो नटेन्द्रः ॥५७॥

सकलरसविदग्धः कृष्णनाम-प्रमोदः
प्रबल-गुणगभीरः प्राणिनिस्तारधीरः ।
निरुपम-तनुरूपः द्योतितानङ्गभूपः
स्फुरतु हृदयमध्ये गौरचन्द्रो नटेन्द्रः ॥५८॥

विमल कमलवक्त्रः पक्वबिम्बाधरोष्ठ-
स्तिलकुसुम-सुनासः कम्बुकण्ठः सुदीर्घं ।
सुवलित-भुजदण्डो नाभिगंभीररूपः
स्फुरतु हृदयमध्ये गौरचन्द्रो नटेन्द्रः ॥५९॥

कषितकनककान्तेः सारलावण्यमूर्तिः
कलिकलुषविहन्ता यस्यकीर्तिर्वरिष्ठा ।
अखिलभुवनलोके प्रेमभक्तिः प्रदाता
स्फुरतु हृदयमध्ये गौरचन्द्रो नटेन्द्रः ॥६०॥

बहुविध मणिमाला बद्धकेशो विचित्रो
मलयजतिलकोद्यद्भालदेशोऽलकालिः ।
श्रवणयुगललोलत्कुन्तलो हारवक्षाः
स्फुरतु हृदयमध्ये गौरचन्द्रो नटेन्द्रः ॥६१॥

यदवधि हरिनाम प्रादुरासीत् पृथिव्यां
तदवधि खलु लोका वैष्णवाः सर्वतस्ते ।
तिलक-विमलमाला नामयुक्ताः पवित्राः
हरि हरि कलिमध्ये एवमेवं बभूव ॥६२॥

जीवे पूर्णदया यतः करुणया हा हा रवैः प्रार्थनां
हे हे कृष्ण कृपानिधे ! भवमहादावाग्निदग्धान् जनान् ।
त्राहि त्राहि महाप्रभो ! स्वकृपया भक्तिं निजां देह्यल-
मैवं गौरहरिः सदा प्रकुरुते दीनैकनाथः प्रभुः ॥६३॥

विषण्ण--चित्तान् कलिपाप--भीतान्
संवीक्ष्य गौरो हरिनाम--मंत्रम्।
स्वयं ददौ भक्तजनान् समादिशेत्
कुरुष्व संकीर्तननृत्यवाद्यान् ॥६४॥

हरेर्मूर्तिं सुरूपाङ्गीं त्रिभङ्गमधुराकृतिम्।
इति गौरो वदेद्भक्तान् स्थापयध्वं गृहे गृहे ॥६५॥

सुशोणपद्मपत्राक्ष ! सुबिम्बाधरपल्लव !।
सुनासापुटलालित्य ! गौरचन्द्र नमोऽस्तुते ॥६६॥

कन्दर्पकोटिलावण्य ! कोटिचन्द्राननत्विषे।
कोटिकाञ्चन--पुष्पाभ ! गौरचन्द्र ! नमोऽस्तुते ॥६७॥

समुक्तादन्तपंक्त्याभ ! हास्यशोभाशुभाकर !।
सिंहग्रीव ! लसत्कण्ठ ! गौरचन्द्र ! नमोऽस्तुते ॥६८॥

मल्लिमालोल्लसद्वक्षः कर्णालम्बितमौक्तिक !।
कङ्कनाङ्गदसंयुक्त ! महाभुज ! नमोऽस्तुते ॥६९॥

मृगेन्द्रमध्यकङ्काल ! जानुरंभातिसुन्दर !।
कूर्मपृष्ठपदद्वन्द्व ! गौरचन्द्र ! नमोऽस्तुते ॥७०॥

आश्रये तव पादाब्जं कलिका चम्पकांगुलम्।
कृपां कुरु दयानाथ ! गौरचन्द्र ! नमोऽस्तुते ॥७१॥

नखपंक्तिजितानेकमाणिक्यमुकुरद्युते।
चरणे शरणं याचे गौरचन्द्र ! नमोऽस्तुते ॥७२॥

ध्वजवज्राङ्किते पादपद्मेऽहं शरणं गतः।
करिष्यति यमः किं मे गौरचन्द्र ! नमोऽस्तुते ॥७३॥

शतशत--पतितानां त्राणकर्ता प्रभुस्त्वं
कथमपि किमु दोषे वञ्चितोऽहं प्रपन्नः ।
कलिभय-कृतभीतं त्राहि मां दीनबन्धो !
शरणगतगतिस्त्वं किं ब्रुवे गौरचन्द्र ! ॥७४॥

किमद्भुतं गौरहरेश्चरित्रं
नामोपदेशाद्धरिमाश्रयन्ति ।
नृत्यन्ति गायन्ति रुदन्ति लोका
रटन्ति स्वार्थान् हरिभक्तियुक्ताः ॥७५॥

निरन्तरं कृष्णकथां परस्परं
सुभक्तिदं नाम हरेर्वदन्ति वै ।
जल्पन्ति लोका भुविभावविह्वला
गौरेऽवतीर्णे कलिपापनाशके ॥७६॥

सत्यत्रेताद्वापरेषु यज्ञध्यानतपोव्रतैः ।
केषां केषां फलं जातं शुभकर्मविधानतः ॥७७॥

कलौ श्रीगौरकृपया नाममात्रैकजल्पकाः ।
कृष्णसान्निध्यसंप्राप्ताः प्रेमभक्तिपरायणाः ॥७८॥

अणुब्रह्माण्डयोर्मध्ये चैतन्येन समाहृताम् ।
हरेकृष्णरामनाम--मालां भक्तिप्रदायिनीम् ॥७९॥

जल्पन्ति हरिनामानि चैतन्यज्ञानरूपतः ।
भजन्ति वैष्णवान् ये तु ते गच्छन्ति हरेः पदम् ॥८०॥

शृण्वन्ति ये वै गुरुतत्त्वगाथां
गायन्ति यत्नैर्हरिनाम मंत्रम् ।
अर्चन्ति साधुं गुरुदेवतां च
चैतन्यभक्ताः कलिकालमध्ये ॥८१॥

कृष्णचैतन्यदेवेन हरिनाम प्रकाशितम् ।
येन केनापि तत्प्राप्तं धन्योऽसौ लोकपावनः ॥८२॥

यदि स्यात् वैष्णवे प्रीतिः सदा कीर्तनलम्पटः ।
गौराङ्गचन्द्रविमुखः न वै भागवतोऽपि सः ॥८३॥

अनन्यचेता हरिमूर्तिसेवां
करोति नित्यं यदि धर्मनिष्ठः
तथापि धन्यो न हि तत्त्ववेत्ता
गौराङ्गचन्द्रे विमुखो यदि स्यात् ॥८४॥

किमु सुखमुपभोक्तुं वाञ्छयेद्वञ्चितोऽसौ
सकल--निगमसिद्धं गौरचन्द्रं न वेत्ति ।
हरि हरि कथमेतत् कुत्र यातं चरित्रं
स भवजलधिमध्ये कुंभीपाके पपात ॥८५॥

शचीसुत--पदाम्बुजे शरणमात्रमन्वेषणं
करोमि कुलदैवते प्रबल-कातरे वैष्णवाः ।
कृपां कुरुत सर्वदा मयि विचित्रवाञ्छास्पदं
मम प्रणत-चेतसो भवतु सिद्धिरव्याहता ॥८६॥

न धनं न यशो न कुलं न तपो
न जनं न शुभं न सुतं न सुखम् ।
चरणे शरणं तव गौरहरे !
मम जन्मनि जन्मनि देहि वरम् ॥८७॥

नानाक्लेशामयैर्युक्तं स्मृतिहीनं च मां प्रभो ।
भवभीतेगौरचन्द्र ! त्राहि त्राहि कृपानिधे ! ॥८८॥

अनेक--जन्म--भ्रमणे मनुष्योऽहं भवन् कलौ ।
व्याकुलात्मा पदाब्जे ते शरणं रक्ष मां प्रभो ॥८९॥

कातरं पतितं शोच्यं त्राहि मां श्रीशाचीसुत ! ।
सर्वे प्रेमसुखेमग्ना वञ्चितं मा कुरु प्रभो ॥९०॥

सर्वेषां पापयुक्तानां त्रातुं शक्तोऽन्यदैवतः ।
ममोद्धारे प्रभुर्गौरो यतः पतितपावनः ॥९१॥

श्रीगौरचरण--द्वन्द्वे याचे याचे पुनः पुनः ।
जीवने मरणे वापि तव रूपं विचिन्तये ॥९२॥

कृष्ण त्वं द्वापरे श्यामं कलौ गौराङ्गविग्रहम् ।
धृत्वाऽशेषजनान् प्रेमभक्तिं यच्छसि लीलया ॥९३॥

यथेप्सितं गौरपदारविन्दे
　　निवेदितं देह--मनो--वचोभिः ।
सर्वार्थसिद्धिं कुरु मे कृपालो
　　निरन्तरं ते स्मृतिरस्तु नित्या ॥९४॥

स्वतंत्रस्तु प्रभुरेव लीलामनुजविग्रहम् ।
धृत्वा लोकपरित्राणं कृतवान् हरिनामभिः ॥९५॥

अनाथबन्धो करुणैकसिन्धो !
　　संसारबन्धात् कुरु मां विमुक्तम् ।
भ्रमामि तीर्थान् तव नामगानै-
　　र्दृष्ट्वा सुसाधून् हरिदेवरूपान् ॥९६॥

यदुक्तं यत्कृतं पूर्वं यच्छ्रुतं यन्मनोगतम् ।
सर्वं क्षमस्व हे गौर त्वत्स्मृतिः स्यात् सदा मम ॥९७॥

लज्जां त्यक्त्वा पदे याचे भक्तिं मां प्रेमलक्षणाम् ।
देहि गौर कृपासिन्धो ! त्वद्विना नास्ति दुःखहा ॥९८॥

अनेकजन्मकृतमज्जतोऽब्धौ
सिद्धिं कुरुष्व प्रभुगौरचन्द्र ! ।
समुज्ज्वलां ते पदपद्मसेवां
करोमि नित्यं हरिकीर्तनं च ॥९९॥

व्रजेन्द्रनन्दनाभिन्नं गौराङ्ग ! त्वां निवेदये ।
कृपां कुरु दयानाथ ! सर्वसेवां करोम्यहम् ॥१००॥

गीयते यै रतित्वेन चैतन्य--शतकं मुदा ।
पठ्यते श्रूयते तैस्तु प्राप्तः स्यात् श्रीशचीसुतः ॥१०१॥

इति श्रीचैतन्यशतकं समाप्तम् ।

# श्रीचैतन्यचन्द्रामृतम् ।

स्तुमस्तं चैतन्याकृतिमतिविमर्यादपरमा-
द्भुतौदार्यं वर्यं व्रजपतिकुमारं रसयितुम् ।
विशुद्ध--स्व--प्रेमोन्मदमधुरपीयूषलहरीं
प्रदातुं चान्येभ्यः परपद--नवद्वीपप्रकटम् ॥ १ ॥

सर्वैराम्नायचूडामणिभिरपि न संलक्ष्यते यत्स्वरूपं
श्रीश-ब्रह्माद्यगम्या सुमधुरपदवी कापि यस्यास्ति रम्या ।
येनाकस्माज्जगच्छ्रीहरिरसमदिरामत्तमेतद्व्यधायि
श्रीमच्चैतन्यचन्द्रः स किमु मम गिरां गोचरश्चेतसो वा ?

धर्मे निष्ठां दधदनुपमां विष्णुभक्तिं गरिष्ठां
संबिभ्राणो दधदहह हृत्तिष्ठतीवाश्मसारम् ।
नीचो गोप्नादपि जगदहो प्लावयत्यश्रुपूरैः
को वा जानात्यहह गहनं हेमगौराङ्गरङ्गम् ? ॥ ३ ॥

धर्मास्पृष्टः सततपरमाविष्ट एवात्यधर्मे
दृष्टिं प्राप्तो न हि खलु सतां सृष्टिषु क्वापि नो सन् ।
यद्दत्तश्रीहरिरससुधास्वादमत्तः प्रनृत्य-
त्युच्चैर्गायत्यथ विलुठति स्तौमि तं कञ्चिदीशम् ॥ ४ ॥

अकस्मादेवाविर्भवति भगवन्नामलहरी
परीतानां पापैरपि पुरुभिरेषां तनुभृताम् ।
अहो वज्रप्रायं हृदपि नवनीतायितमभू-
न्नृणां यस्मिँल्लोकेऽवतरति स गौरो मम गतिः ॥ ५ ॥

न योगो न ध्यानं न च जपतपस्त्यागनियमा
न वेदा नाचारः क्व नु बत निषिद्धाद्युपरतिः ।
अकस्माच्चैतन्येऽवतरति दयासारहृदये
पुमर्थानां मौलिं परमिह मुदा लुण्ठति जनः ॥ ६ ॥

यन्नाप्तं कर्मनिष्ठैर्न च समधिगतं यत्तपोध्यानयोगै-
र्वैराग्यैस्त्यागतत्त्वस्तुतिभिरपि न यत्तर्कितञ्चापि कैश्चित् ।
गोविन्दप्रेमभाजामपि न च कलितं यद्रहस्यं स्वयं त-
न्नाम्नैव प्रादुरासीदवतरति परे यत्र तं नौमि गौरम् ॥ ७ ॥

धिगस्तु–ब्रह्माहं–वदनपरिफुल्लान् जडमतीन्
क्रियासक्तान् धिग् धिग् विकटतपसो धिक् च यमिनः ।
किमेतान् शोचामो विषयरसमत्तान्नरपशू-
न्न केषाञ्चिल्लेशोऽप्यहह मिलितो गौरमधुनः ॥ ८ ॥

बध्नन् प्रेमभरप्रकम्पितकरो ग्रन्थीन् कटीडोरकैः
संख्यातुं निजलोक-मङ्गल-हरेकृष्णेति-नाम्नां जपन् ।
अश्रुस्नातमुखः स्वमेव हि जगन्नाथं दिदृक्षुर्गता-
यातैर्गौरतनुर्विलोचनमुदं तन्वन् हरिः पातु वः ॥ ९ ॥

पाषाणः परिषेचितोऽमृतरसैर्नैवांकुरः सम्भवेत्
लांगूलं सरमापतेर्विवृणतः स्यादस्य नैवार्जवम् ।
हस्तावुन्नयता बुधाः कथमहो धार्यं विधोर्मण्डलं
सर्वं साधनमस्तु गौरकरुणाऽभावे न भावोत्सवः ॥१०॥

सौन्दर्ये कामकोटिः सकलजनसमाह्लादने चन्द्रकोटि-
र्वात्सल्ये मातृकोटिस्त्रिदशविटपितोऽप्यद्भुतौदार्यकोटिः ।
गाम्भीर्येऽम्भोधिकोटिर्मधुरिमणि सुधाक्षीरमाध्वीककोटि-
र्गौरो देवः स जीयात् प्रणयरसपदे दर्शिताश्चर्यकोटिः॥११॥

प्रेमा नामाद्भुतार्थः श्रवणपथगतः कस्य नाम्नां महिम्नः
को वेत्ता कस्य वृन्दावनविपिन-महामाधुरीषु प्रवेशः ।
को वा जानाति राधां परमरसचमत्कारमाधुर्यसीमा-
मेकश्चैतन्यचन्द्रः परमकरुणया सर्वमाविश्चकार ॥१२॥

नमश्चैतन्यचन्द्राय कोटिचन्द्राननत्विषे ।
प्रेमानन्दाब्धिचन्द्राय चारुचन्द्रांशुहासिने ॥१३॥

यस्यैव पादाम्बुजभक्तिलभ्यः प्रेमाभिधानः परमः पुमर्थः ।
तस्मै जगन्मङ्गलमङ्गलाय चैतन्यचन्द्राय नमो नमस्ते ॥१४॥

दधन्मूर्धन्यूर्ध्वं मुकुलितकराम्भोजयुगलं
गलन्नेत्राम्भोभिः स्नपितमृदुगण्डस्थलयुगम् ।
दुकूलेनावीतं नवकमलकिञ्जल्करुचिना
परं ज्योतिर्गौरं कनकरुचिचौरं प्रणमत ॥१५॥

सिंहस्कन्धं मधुर-मधुरं स्मेरगण्डस्थलान्तं
दुर्विज्ञेयोज्ज्वलरसमयाश्चर्यनानाविकारम् ।
बिभ्रत् कान्तिं विकचकनकाम्भोज-गर्भाभिरामा-
मेकीभूतं वपुरवतु वो राधया माधवस्य ॥१६॥

पूर्णप्रेमरसामृताब्धिलहरी-लोलाङ्गगौरच्छटा-
कोट्याच्छादितविश्वमीश्वरविधिव्यासादिभिः संस्तुतम् ।
दुर्लक्ष्यां श्रुतिकोटिभिः प्रकटयन्मूर्तिं जगन्मोहिनी-
माश्चर्यं लवणोदरोधसि परं ब्रह्म स्वयं नृत्यति ॥१७॥

उद्दामदामनकदामगणाभिराम-
माराममराममविरामगृहीतनाम ।
कारुण्यधाम कनकोज्ज्वलगौरधाम
चैतन्यनाम परमं कलयाम धाम ॥१८॥

अवतीर्णे गौरचन्द्रे विस्तीर्णे प्रेमसागरे ।
सुप्रकाशितरत्नौघे यो दीनो दीन एव सः ॥१९॥

श्रवण-मनन-संकीर्त्यादिभक्त्या मुरारे-
र्यदि परमपुमर्थं साधयेत् कोऽपि भद्रम् ।
मम तु परमपारप्रेमपीयूषसिन्धोः
किमपि रसरहस्यं धाम गौरं नमस्यम् ॥२०॥

निष्ठां प्राप्ता व्यवहृतिततिर्लौकिकी वैदिकी या
या वा लज्जा प्रहसन-समुद्गान-नाट्योत्सवेषु ।
ये वाभूवन्नहह सहजप्राणदेहार्थ-धर्मा
गौरश्चौरः सकलमहरत् कोऽपि मे तीव्रवीर्यः ॥२१॥

महाकर्मस्रोतोनिपतितमपि स्थैर्यमयते
महापाषाणेभ्योऽप्यतिकठिनमेति द्रववदशाम् ।

नटत्युर्ध्वं निःसाधनमपि महायोगिमनसां
भुवि श्रीचैतन्येऽवतरति मनश्चित्रविभवे ॥२२॥

स्त्रीपुत्रादिकथां जहुर्विषयिणः शास्त्रप्रवादं बुधा
योगीन्द्रा विजहुर्मरुन्नियमजक्लेशं तपस्तापसाः ।
ज्ञानाभ्यासविधिं जहुश्च यतयश्चैतन्यचन्द्रे परा-
माविष्कुर्वति भक्तियोगपदवीं नैवान्य आसीद्रसः ॥२३॥

भ्रान्तं यत्र मुनीश्वरैरपि पुरा यस्मिन् क्षमामण्डले
कस्यापि प्रविवेश नैव धिषणा यद्वेद नो वा शुकः ।
यन्न क्वापि कृपामयेन च निजेऽप्युद्घाटितं शौरिणा
तस्मिन्नुज्ज्वलभक्तिवर्त्मनि सुखं खेलन्ति गौरप्रियाः ॥२४॥

ईशं भजन्तु पुरुषार्थचतुष्टयाशा
दासा भवन्तु च विधाय हरेरुपासाः ।
किञ्चिद्रहस्यपदलोभितधीरहं तु
चैतन्यचन्द्रचरणं शरणं करोमि ॥२५॥

अप्यगण्यमहापुण्यमनन्यशरणं हरेः ।
अनुपासित-चैतन्यमधन्यं मन्यते मतिः ॥२६॥

भ्रातः कीर्तय नाम गोकुलपतेरुद्दाम-नामावलीं
यद्वा भावय तस्य दिव्यमधुरं रूपं जगन्मोहनम् ।
हन्त प्रेममहारसोज्ज्वलपदे नाशापि ते सम्भवेत्
श्रीचैतन्यमहाप्रभोर्यदि कृपादृष्टिः पतेन्न त्वयि ॥२७॥

भूतो वा भविताऽपि वा भवति वा कस्यापि यः कोऽपि वा
सम्बन्धो भगवत्पदाम्बुजरसे नास्मिन् जगन्मण्डले ।
तत्सर्वं निजभक्तिरूप-परमैश्वर्येण विक्रीडतो
गौरस्यैव कृपाविजृम्भिततया जानन्ति निर्मत्सराः ॥२८॥

स्वादं स्वादं मधुरिमभरं स्वीय-नामावलीनां
मादं मादं किमपि विवशीभूतविस्रस्तगात्रः ।
वारंवारं व्रजपतिगुणान् गाय गायेति जल्पन्
गौरो दृष्टः सकृदपि न यैर्दुर्घटा तेषु भक्तिः ॥२९॥

अभूद्गेहे गेहे तुमुल-हरिसंकीर्तनरवो
बभौ देहे देहे विपुलपुलकाश्रु-व्यतिकरः ।
अपि स्नेहे स्नेहे परममधुरोत्कर्षपदवी
दवीयस्याम्नायादपि जगति गौरेऽवतरति ॥३०॥

जाड्यं कर्मसु कुत्रचिज्जप-तपोयोगादिकं कुत्रचिद्-
गोविन्दार्चनविक्रिया क्वचिदपि ज्ञानाभिमानः क्वचित् ।
श्रीभक्तिः क्वचिदुज्ज्वलापि च हरेर्वाङ्मात्र एव स्थिता
हा चैतन्य कुतो गतोऽसि पदवी कुत्रापि ते नेक्ष्यते ॥३१॥

विना बीजं किं नांकुरजननमन्धोऽपि न कथं
प्रपश्येन्नो पंगुर्गिरिशिखरमारोहति कथम् ।
यदि श्रीचैतन्ये हरिरसमयाश्चर्यविभवे-
ऽप्यभक्तानां भावी कथमपि परप्रेमरभसः ॥३२॥

अकस्मादेवैतद्भुवनमभितः प्लावितमभू-
न्महाप्रेमाम्भोधेः किमपि रसवन्याभिरखिलम् ।
अकस्माच्चादृष्टश्रुतचर-विकारैरलमभू-
च्चमत्कारः कृष्णे कनकरुचिराङ्गेऽवतरति ॥३३॥

अरे मूढा गूढां विचिनुत हरेर्भक्तिपदवीं
दवीयस्या दृष्ट्याप्यपरिचितपूर्वां मुनिवरैः ।
न विश्रम्भश्चित्ते यदि यदि च दौर्लभ्यमिव तत्
परित्यज्याशेषं व्रजत शरणं गौरचरणम् ॥३४॥

तावद्ब्रह्मकथा विमुक्तिपदवी तावन्न तिक्तीभवे-
त्तावच्चापि विशृंखलत्वमयते नो लोकवेदस्थितिः ।
तावच्छास्त्रविदां मिथः कलकलो नानाबहिर्वर्त्मसु
श्रीचैतन्यपदाम्बुज-प्रियजनो यावन्न दृग्गोचरः ॥३५॥

सदा रङ्गे नीलाचलशिखरशृङ्गे विलसतो
हरेरेव भ्राजन्मुखकमलभृङ्गेक्षणयुगम् ।
समुत्तुङ्गप्रेमोन्मदरस-तरङ्गं मृगदृशा-
मनङ्गं गौराङ्गं स्मरतु गतसङ्गं मम मनः ॥३६॥

क्वचित् कृष्णावेशान्नटति बहुभङ्गीमभिनयन्
क्वचिद्राधाविष्टो हरि हरि हरीत्यार्तरुदितः ।
क्वचिद्रिङ्गन् बालः क्वचिदपि च गोपालचरितो
जगद्गौरो विस्मापयति बहुभंगीमधुरिमा ॥३७॥

अये न कुरु साहसं तव हसन्ति सर्वोद्यमं
जनाः परित उन्मदा हरिरसामृतास्वादिनः ।
इदन्तु निभृतं शृणु प्रणयवस्तु प्रस्तूयते
यदेव निगमेषु तत् पतिरयं हि गौरः परम् ॥३८॥

उद्गृह्णन्ति समस्तशास्त्रमभितो दुर्वारगर्वायिता
धन्यंमन्यधियश्च कर्मतपआद्युच्चावचेषु स्थिताः ।
द्वित्राण्येव जपन्ति केचन हरेर्नामानि वामाशयाः
पूर्वं संप्रति गौरचन्द्र उदिते प्रेमापि साधारणः ॥३९॥

पापीयानपि हीनजातिरपि दुःशीलोऽपि दुष्कर्मणां
सीमापि श्वपचाधमोऽपि सततं दुर्वासनाढ्योऽपि च ।
दुर्देशप्रभवोऽपि तत्र विहितावासोऽपि दुःसङ्गतो
नष्टोऽप्युद्धृत एव येन कृपया तं गौरमेव स्तुमः ॥४०॥

अचैतन्यमिदं विश्वं यदि चैतन्यमीश्वरम् ।
न विदुः सर्वशास्त्रज्ञा ह्यपि भ्राम्यन्ति ते जनाः ॥४१॥

देवे चैतन्यनामन्यवतरति सुरप्रार्थ्यपादाब्जसेवे
विष्वद्रीचीः प्रविस्तारयति सुमधुरप्रेमपीयूषवीचीः ।
को बालः कश्च वृद्धः क इह जडमतिः को बुधः को वराकः
सर्वेषामैकरस्यं किमपि हरिपदे भक्तिभाजां बभूव ॥४२॥

दत्त्वा यः कमपि प्रसादमथ संभाष्य स्मितश्रीमुखं
दूरात् स्निग्धदृशा निरीक्ष्य च महाप्रेमोत्सवं यच्छति ।
येषां हन्त कुतर्ककर्कशधियां तत्रापि नात्यादरः
साक्षात् पूर्णरसावतारिणि हरौ दुष्टा अमी केवलम् ॥४३॥

काशीवासानपि न गणये किं गयां मार्गयेऽहं
मुक्तिः शुक्तीभवति यदि मे कः परार्थप्रसङ्गः ।
त्रासाभासः स्फुरति न महारौरवेऽपि क्व भीतिः
स्त्री-पुत्रादौ यदि कृपयते देवदेवः स गौरः ॥४४॥

वेलायां लवणोदधेर्मधुरिमप्राग्भावसारस्फुर-
ल्लीलायां नववल्लवीरसनिधेरावेशयन्ती जगत् ।
खेलायामपि शैशवे निजरुचा विश्वैकसंमोहिनी
मूर्तिः काचन काञ्चनद्रवमयी चित्ताय मे रोचते ॥४५॥

दृष्ट्वा माद्यति नूतनाम्बुदचयं संवीक्ष्य बर्हं भवे-
दत्यन्तं विकलो विलोक्य वलितां गुञ्जावलीं वेपते ।
दृष्टे श्यामकिशोरकेऽपि चकितं धत्ते चमत्कारिता-
मित्थं गौरतनुः प्रचारित-निजप्रेमा हरिः पातु वः ॥४६॥

दुष्कर्मकोटिनिरतस्य दुरन्त–घोर-
दुर्वासना–निगड–शृंखलितस्य गाढम् ।
क्लिश्यन्मतेः कुमतिकोटिकदर्थितस्य
गौरं विनाद्य मम को भवितेह बन्धुः ? ४७॥

हा हन्त चित्तभुवि मे परमोषरायां
सद्भक्तिकल्पलतिकांकुरिता कथं स्यात् ।
ह्येकमेव परमाश्वसनीयमस्ति
चैतन्यनाम कलयन्न कदापि शोच्यः ॥४८॥

कृपासिन्धुः सन्ध्यारुणरुचिरचित्राम्बरधरो-
ज्ज्वलः पूर्णप्रेमामृतमय–महाज्योतिरमलः ।
शचीगर्भक्षीराम्बुधिभव उदाराद्भुतकलः
कलानाथः श्रीमानुदयतु मम स्वान्तनभसि ॥४९॥

क्व तावद्वैराग्यं क्व च विषयवार्तासु नरके-
ष्विवोद्वेगः क्वासौ विनयभरमाधुर्यलहरी ।
क्व तत्तेजो वाऽलौकिकमथ महाभक्तिपदवी
क्व सा वा संभाव्या यदवकलितं गौरगतिषु ॥५०॥

स्वपादाम्भोजैकप्रणयलहरीसाधनभृतां
शिव-ब्रह्मादीनामपि च सुमहाविस्मयभृताम् ।
महाप्रेमावेशात् किमपि नटतामुन्मद इव
प्रभुर्गौरो जीयात् प्रकटपरमाश्चर्यमहिमा ॥५१॥

सर्वे नारद–शंकरादय इहायाताः स्वयं श्रीरपि
प्राप्ता देवहलायुधोऽपि मिलितो जाताश्च ते वृष्णयः ।
भूयः किं व्रजवासिनोऽपि प्रकटा गोपाल-गोप्यादयः
पूर्णप्रेमरसेश्वरेऽवतरति श्रीगौरचन्द्रे भुवि ॥५२॥

भृत्याः स्निग्धा अथ सुमधुर-प्रोज्ज्वलोदारभाज-
स्तत्पादाब्जद्वितयसविधे सर्व एवावतीर्णाः ।
प्रापुः पूर्वाधिकतर-महाप्रेमपीयूषलक्ष्मीं
स्वप्रेमाणं वितरति जगत्यद्भुतं हेमगौरे ॥५३॥

अलौकिक्या प्रेमोन्मदरसविलासप्रथनया
न यः श्रीगोविन्दानुचरसचिवेष्वेषु कृतिषु ।
महाश्चर्यं प्रेमोत्सवमपि हठाद्दातरि न य-
न्मतिर्गौरे साक्षात् पर इह स मूढो नरपशुः ॥५४॥

असंख्याः श्रुत्यादौ भगवदवतारा निगदिताः
प्रभावं कः सम्भावयतु परमीशादितरतः ?
किमन्यत् मत्प्रेष्ठे कति कति सतां नाप्यनुभवा-
स्तथापि श्रीगौरे हरि हरि न मूढा हरिधियः ॥५५॥

रक्षोदैत्यकुलं हतं कियदिदं योगादिवर्त्मक्रिया-
मार्गो वा प्रकटीकृतः कियदिदं सृष्ट्यादिकं वा कियत् ।
मेदिन्युद्धरणादिकं कियदिदं प्रेमोज्ज्वलाया महा-
भक्तेर्वर्त्मकरीं परां भगवतश्चैतन्यमूर्तिं स्तुमः ॥५६॥

साक्षान्मोक्षादिकार्थान् विविधविकृतिभिस्तुच्छतां दर्शयन्तं
प्रेमानन्दं प्रसूते सकलतनुभृतां यस्य लीला-कटाक्षः ।
नासौ वेदेषु गूढो जगति यदि भवेदीश्वरो गौरचन्द्र-
स्तत्प्राप्तोऽनीशवादः शिव शिव गहने विष्णुमाये नमस्ते ॥५७

वासो मे वरमस्तु घोरदहनज्वालावलीपञ्जरे
श्रीचैतन्यपदारविन्दविमुखैर्मा कुत्रचित् सङ्गमः ।
वैकुण्ठादिपदं स्वयं च मिलितं नो मे मनो लिप्सते
पादाम्भोजरसच्छटा यदि मनाक् गौरस्य नो रस्यते ॥५८॥

सकृन्नयनगोचरीकृत–तदश्रुधाराकुल–
प्रफुल्लकमलेक्षण–प्रणयकातर–श्रीमुखः ।
न गौरचरणं जिहासति कदापि लोकोत्तर-
स्फुरन्मधुरिमार्णवं नवनवानुरागोन्मदः ॥५९॥

आचर्य धर्मं परिचर्य विष्णुं विचर्य तीर्थानि विचार्य वेदान् ।
विना न गौरप्रियपादसेवां वेदादि–दुष्प्राप्यपदं विदन्ति ॥६०॥

ज्ञानादिवर्त्मविरुचिं व्रजनाथभक्ति-
रीतिं न वेद्मि न च सद्गुरवो मिलन्ति ।
हा हन्त हन्त मम कः शरणं निगूढ-
गौरो हरिस्तव न कर्णपथं गतोऽस्ति ॥६१॥

मृग्यापि सा शिव–शुकोद्धव–नारदाद्यै–
राश्चर्यभक्तिपदवी न दवीयसी नः ।
दुर्बोध–वैभवपते मयि पामरेऽपि
चैतन्यचन्द्र यदि ते करुणाकटाक्षः ॥६२॥

वृथावेशं कर्मस्वपनयत वार्तामपि मनाक्
न कर्णाभ्यर्णेऽपि क्वचन नयताध्यात्मसरणेः ।
न मोहं देहादौ भजत परमाश्चर्यमधुरः
पुमर्थानां मौलिर्मिलति भवतां गौरकृपया ॥६३॥

अलं शास्त्राभ्यासैरलमहह तीर्थाटनिकया
सदा योषिद्व्याघ्रचास्त्रसत वितथं थूत्कुरुत रे ।
तृणंमन्या धन्याः श्रयत किल संन्यासिकपटं
नटन्तं गौराङ्गं निजरसमदादम्बुधितटे ॥६४॥

उच्चैरास्फालयन्तं करचरणमहो हेमदण्ड-प्रकाण्डौ
बाहू प्रोद्धृत्य सत्ताण्डव-तरलतनुं पुण्डरीकायताक्षम् ।

विश्वस्यामङ्गलघ्नं किमपि हरिहरीत्युन्मदानन्द-नादै-
र्वन्दे तं देवचूडामणिमतुलरसाविष्ट-चैतन्यचन्द्रम् ॥६५॥

हुङ्कारैर्दशदिङ्मुखं मुखरयन्नट्टाट्टहासच्छटा-
वीचीभिः स्फुटकुन्दकैरवगणप्रोद्भासि कुर्वन्नभः ।
सर्वाङ्गं पवनोच्चलच्चलदलप्रायप्रकम्पं दध-
न्मत्तः प्रेमरसोन्मदाप्लुतगतिर्गौरो हरिः शोभते ॥६६॥

क्व सा निरंकुशकृपा क्व तद्वैभवमद्भुतम् ।
क्व सा वत्सलता शौरे यादृक् गौरे तवात्मनि ॥६७॥

आनन्दलीलामयविग्रहाय हेमाभ-दिव्यच्छविसुन्दराय ।
तस्मै महाप्रेमरसप्रदाय चैतन्यचन्द्राय नमो नमस्ते ॥६८॥

महापुरुषमानिनां सुर-मुनीश्वराणां निजं
पदाम्बुजमजानतां किमपि गर्वनिर्वासनम् ।
अहो नयनगोचरं निगमचक्रचूडाचयं
शचीसुतमचीकरत् क इह भूरि–भाग्योदयः ॥६९॥

आस्तां नाम महान् महानिति रवः सर्वक्ष्मामण्डले
लोके वा प्रकटास्तु नाम महती सिद्धिश्चमत्कारिणी ।
कामं चारुचतुर्भुजत्वमयतामाराध्य विश्वेश्वरं
चेतो मे बहुमन्यते नहि नहि श्रीगौरभक्तिं विना ॥७०॥

निर्दोषश्चारुनृत्यो विधुतमलिनतावक्रभावः कदाचि-
न्निःशेषप्राणितापत्रयहरणमहाप्रेमपीयूषवर्षी ।
उद्भूतः कोऽपि भाग्योदयरुचिरशचीगर्भदुग्धाम्बुराशे-
र्भक्तानां हृच्चकोरस्वदितपदरुचिर्भाति गौराङ्गचन्द्रः ॥७१॥

देवा दुन्दुभिवादनं विदधिरे गन्धर्वमुख्या जगुः
सिद्धाः सन्ततपुष्पवृष्टिभिरिमां पृथ्वीं समाच्छादयन् ।

दिव्यस्तोत्रपरा महर्षिनिवहाः प्रीत्योपतस्थुर्निज-
प्रेमोन्मादिनि ताण्डवं रचयति श्रीगौरचन्द्रे भुवि ॥७२॥

मत्तकेशरिकिशोरविक्रमः प्रेमसिन्धुजगदाप्लवोद्यमः ।
कोऽपि दिव्यनवहेमकन्दलीकोमलो जयति गौरचन्द्रमाः ॥७३॥

अलङ्कारः पंकेरुहनयन–निःस्यन्दिपयसां
पृषद्भिः सन्मुक्ताफलसुललितैर्यस्य वपुषि ।
उदञ्चद्रोमाञ्चैरपि च परमा यस्य सुषमा
तमालम्बे गौरं हरिमरुणरोचिष्णुवसनम् ॥७४॥

कन्दर्पादपि सुन्दरः सुरसरित्पूरादहो पावनः
शीतांशोरपि शीतलः सुमधुरो माध्वीकसारादपि ।
दाता कल्पमहीरुहादपि महास्निग्धो जनन्या अपि
प्रेम्णा गौरहरिः कदा नु हृदि मे ध्यातुः पदं धास्यति ॥७५॥

पुञ्जं पुञ्जं मधुरमधुरप्रेममाध्वीरसानां
दत्त्वा दत्त्वा स्वयमुरुदयो मोदयन् विश्वमेतत् ।
एको देवः कटितटमिलन्मंजुमाञ्जिष्ठवासा
भासा निर्भर्त्सित–नवतडित्कोटिरेव प्रियो मे ॥७६॥

दृष्टः स्पृष्टः कीर्तितः संस्मृतो वा
दूरस्थैरप्यानतो वादृतो वा ।
प्रेम्णः सारं दातुमीशो य एकः
श्रीचैतन्यं नौमि देवं दयालुम् ॥७७॥

सिञ्चन् सिञ्चन्नयनपयसा पाण्डुगण्डस्थलान्तं
मुञ्चन् मुञ्चन् प्रतिमुहुरहो दीर्घनिःश्वासजातम् ।
उच्चैः क्रन्दन् करुणकरुणो दीर्घ–हाहेति–नादो
गौरः कोऽपि व्रजविरहिणीभावमग्नश्चकास्ति ॥७८॥

किं तावद्व्रत दुर्गमेषु विफलं योगादिमार्गेष्वहो
भक्तिं कृष्णपदाम्बुजे विदधतः सर्वार्थमालुण्ठतः ।
आशा प्रेममहोत्सवे यदि शिव-ब्रह्माद्यलभ्येऽद्भुते
गौरे धामनि दुर्विगाहमहिमोदारे तदा रज्यताम् ॥७९॥

हसन्त्युच्चैरुच्चैरहह कुलवध्वोऽपि परितो
द्रवीभावं गच्छन्त्यपि कुविषयग्रावघटिताः ।
तिरस्कुर्वन्त्यज्ञा अपि सकल-शास्त्रज्ञ-समितिं
क्षितौ श्रीचैतन्येऽद्भुतमहिमसारेऽवतरति ॥८०॥

प्रायश्चैतन्यमासीदपि सकलविदां नेह पूर्वं यदेषां
खर्वा सर्वार्थसारेऽप्यकृत नहि पदं कुण्ठिता बुद्धिवृत्तिः ।
गम्भीरोदारभावोज्ज्वलरसमधुरप्रेमभक्तिप्रवेशः
केषां नासीदिदानीं जगति करुणया गौरचन्द्रेऽवतीर्णे ॥८१॥

अभिव्यक्तो यत्र द्रुतकनकगौरो हरिरभू-
न्महिम्ना तस्यैव प्रणयरसमग्नं जगदभूत् ।
अभूदुच्चैरुच्चैस्तुमुलहरिसंकीर्तनविधिः
स कालः किं भूयोऽप्यहह परिवर्तेत मधुरः ? ८२॥

सैवेयं भुवि धन्यगौडनगरी वेलापि सैवाम्बुधेः
सोऽयं श्रीपुरुषोत्तमो मधुपतेस्तान्येव नामानि च ।
नो कुत्रापि निरीक्ष्यते हरि हरि प्रेमोत्सवस्तादृशो
हा चैतन्य कृपानिधान ! तव किं वीक्षे पुनर्वैभवम् ? ८३॥

अपारावारश्चेदमृतमयपाथोधिमधिकं
विमथ्य प्राप्तं स्यात् किमपि परमं सारमतुलम् ।
तथापि श्रीगौराकृति-मदनगोपालचरण-
च्छटास्पृष्टानां तद्वहति विकटामेव कटुताम् ॥८४॥

तृणादपि सुनीचता सहजसौम्यमुग्धाकृतिः
सुधामधुरभाषिता विषयगन्धथूथूत्कृतिः ।
हरिप्रणयविह्वला किमपि धीरनारंभिता
भवन्ति किल सद्गुणा जगति गौरभाजाममी ॥८५॥

कदा शौरेर्गौरे वपुषि परमप्रेमरसदे
सदेकप्राणे निष्कपटकृतभावोऽस्मि भविता ।
कदा वा तस्यालौकिकसदनुमानेन मम हृ-
द्यकस्मात् श्रीराधापदनखमणिज्योतिरुदगात् ॥८६॥

अश्रूणां किमपि प्रवाहनिवहैः क्षौणीं पुरः पङ्किली-
कुर्वन् पाणितले निधाय बदरीपाण्डुं कपोलस्थलीम् ।
आश्चर्यं लवणोदरोधसि वसन् शोणं दधानोंऽशुकं
गौरीभूय हरिः स्वयं वितनुते राधापदाब्जे रतिम् ॥८७॥

सान्द्रानन्दोज्ज्वलनवरसप्रेमपीयूष–सिन्धोः
कोटिं वर्षन् किमपि करुणस्निग्धनेत्राञ्चलेन ।
कोऽयं देवः कनककदलीगर्भगौराङ्गयष्टि-
श्चेतोऽकस्मान्मम निजपदे गाढमुग्रं चकार ॥८८॥

यथा यथा गौरपदारविन्दे विन्देत भक्तिं कृतपुण्यराशिः ।
तथा तथोत्सर्पति हृद्यकस्मात् राधापदांभोजसुधांबुराशिः ॥८९॥

कोऽयं पट्टधटीविराजितकटीदेशः करे कङ्कणं
हारं वक्षसि कुण्डलं श्रवणयोर्बिभ्रत् पदे नूपुरौ ।
ऊर्ध्वीकृत्य निबद्धकुन्तलभरप्रोत्फुल्लमल्लीस्रगा-
पीडः क्रीडति गौरनागरवरो नृत्यन्निजैर्नामभिः ॥९०॥

संसारदुःखजलधौ पतितस्य काम-
क्रोधादि–नक्रमकरैः कवलीकृतस्य ।

दुर्वासना-निगडितस्य निराश्रयस्य
चैतन्यचन्द्र ! मम देहि पदावलम्बम् ॥९१॥

कान्त्या निन्दितकोटिकोटिमदनः श्रीमन्मुखेन्दुच्छटा-
विच्छायीकृतकोटिकोटिशरदुन्मीलत्तुषारच्छविः ।
औदार्येण च कोटिकोटिगुणितं कल्पद्रुमं ह्यल्पयन्
गौरो मे हृदि कोटिकोटिजनुषां भाग्यैः पदं धास्यति ॥९२॥

क्षणं हसति रोदिति क्षणमथ क्षणं मूर्च्छति
क्षणं लुठति धावति क्षणमथ क्षणं नृत्यति ।
क्षणं श्वसिति मुञ्चति क्षणमुदार-हाहा-रवं
महाप्रणयलीलया विहरतीह गौरो हरिः ॥९३॥

क्षणं क्षीणः पीनः क्षणमहह साश्रुः क्षणमथ
क्षणं स्मेरः शीतः क्षणमनलतप्तः क्षणमपि ।
क्षणं धावन् स्तब्धः क्षणमधिकजल्पन् क्षणमहो
क्षणं मूको गौरः स्फुरतु मम देहो भगवतः ॥९४॥

कैवल्यं नरकायते त्रिदशपूराकाशपुष्पायते
दुर्दान्तेन्द्रियकालसर्पपटली प्रोत्खातदंष्ट्रायते ।
विश्वं पूर्णसुखायते विधि-महेन्द्रादिश्च कीटायते
यत्कारुण्यकटाक्ष-वैभववतां तं गौरमेव स्तुमः ॥९५॥

प्रवाहैरश्रूणां नवजलदकोटीरिव दृशो-
र्दधानं प्रेमर्द्ध्या परमपदकोटीप्रहसनम् ।
वमन्तं माधुर्यैरमृतनिधिकोटीरिव तनु-
च्छटाभिस्तं वन्दे हरिमहह संन्यासकपटम् ॥९६॥

स्वतेजसा कृष्णपदारविन्दे महारसावेशितविश्वमीशम् ।
कमप्यशेष-श्रुतिगूढवेशं गौराङ्गमङ्गीकुरु मूढचेतः ॥९७॥

चैतन्येति कृपामयेति परमोदारेति नानाविध-
प्रेमावेशित-सर्वभूतहृदयेत्याश्चर्यधामन्निति।
गौरांगेति गुणार्णवेति रसरूपेति स्वनामप्रिये-
त्यश्रान्तं मम जल्पतो जनिरियं यायादिति प्रार्थये ॥९८॥

माद्यन्तः परिपीय यस्य चरणाम्भोज-स्रवत्प्रोज्ज्वल-
प्रेमानन्दमयामृताद्भुतरसान् सर्वे सुपर्वेडिताः।
ब्रह्मादींश्च हसन्ति नातिबहु-मन्यन्ते महावैष्णवान्
धिक्कुर्वन्ति च ज्ञान-कर्म-विदुषस्तं गौरमेव स्तुमः ॥९९॥

यो मार्गो दूरशून्यो य इह बत वलत्कण्टको योऽतिदुर्गो
मिथ्यार्थभ्रामको यः सपदि रसमयानन्दनिःस्यन्दनो यः।
सद्यः प्रद्योतयंस्तं प्रकटितमहिमा स्नेहवद्धृद्गुहायां
कोऽप्यन्तर्ध्वान्तहन्ता स जयति नवद्वीपदीप्यत्प्रदीपः ॥१००॥

दूरादेव दहन् कुतर्कशलभान् कोटीन्दुसंशीतल-
ज्योतिःकन्दलसंवलन्मधुरिमा बाह्यान्तरध्वान्तहृत्।
सस्नेहाशयवृत्तिदिव्यविसरत्तेजाः सुवर्णद्युतिः
कारुण्यादिह जाज्वलीति स नवद्वीपप्रदीपोऽद्भुतः ॥१०१॥

स्वयं देवो यत्र द्रुतकनकगौरः करुणया
महाप्रेमानन्दोज्ज्वलरसवपुः प्रादुरभवत्।
नवद्वीपे तस्मिन् प्रतिभवन-भक्त्युत्सवमये
मनो मे वैकुण्ठादपि च मधुरे धाम्नि रमते ॥१०२॥

बिभ्रद्वर्णं किमपि दहनोत्तीर्णसौवर्णसारं
दिव्याकारं किमपि कलयन् दृप्तगोपालमौलेः।
आविष्कुर्वन् क्वचिदवसरे तत्तदाश्चर्यलीलां
साक्षाद्राधामधुरिपुवपुर्भाति गौराङ्गचन्द्रः ॥१०३॥

यत्तद्वदन्तु शास्त्राणि यत्तद्व्याख्यान्तु तार्किकाः ।
जीवनं मम चैतन्यपादाम्भोजसुधैव तु ॥१०४॥

पादाघातरवैर्दिशो मुखरयन् नेत्राम्भसां वेणीभिः
क्षौणिं पङ्किलयन्नहो विशदयन्नट्टाट्टहासैर्नभः ।
चन्द्रज्योतिरुदारसुन्दरकटिव्यालोलशोणाम्बरः
को देवो लवणोदकूलकुसुमोद्याने मुदा नृत्यति ? १०५॥

धिगस्तु कुलमुज्ज्वलं धिगपि वाग्मितां धिग्यशो
धिगध्ययनमाकृतिं नववयः श्रियं चापि धिक् ।
द्विजत्वमपि धिक् परं विमलमाश्रमाद्यं च धिक्
न चेत् परिचितः कलौ प्रकटगौरगोपीपतिः ॥१०६॥

ध्यायन्तो गिरिकन्दरेषु बहवो ब्रह्मानुभूयासते
योगाभ्यासपराश्च सन्ति बहवः सिद्धा महीमण्डले ।
विद्या-शौर्य-धनादिभिश्च बहवो वल्गन्ति मिथ्योद्धताः
को वा गौरकृपां विनाद्य जगति प्रेमोन्मदो नृत्यतु ? १०७॥

अन्तर्ध्वान्तचयं समस्तजगतामुन्मूलयन्ती हठात्
प्रेमानन्दरसाम्बुधिं निरवधि प्रोद्वेलयन्ती बलात् ।
विश्वं शीतलयन्त्यतीव विकलं तापत्रयेणानिशं
साऽस्माकं हृदये चकास्तु सततं चैतन्यचन्द्रच्छटा ॥१०८॥

उपासतां वा गुरुवर्यकोटीरधीयतां वा श्रुतिशास्त्रकोटीः ।
चैतन्यकारुण्यकटाक्षभाजां सद्यः परं स्याद्धि रहस्यलाभः ॥१०९

अपारस्य प्रेमोज्ज्वल–रसरहस्यामृतनिधे–
र्निधानं ब्रह्मेशार्चित इह हि चैतन्यचरणः ।
अतस्तं ध्यायन्तु प्रणयभरतो यान्तु शरणं
तमेव प्रोन्मत्तास्तमिह किल गायन्तु कृतिनः ॥११०॥

श्रीमद्भागवतस्य यत्र परमं तात्पर्यमुट्टङ्कितं
श्रीवैयासकिना दुरन्वयतया रासप्रसंगेऽपि यत् ।
यद्राधारतिकेलि–नागररसास्वादैक–सद्भाजनं
तद्वस्तुप्रथनाय गौरवपुषा लोकेऽवतीर्णो हरिः ॥१११॥

पात्रापात्रविचारणं न कुरुते न स्वं परं वीक्षते
देयादेय-विमर्शको न हि न वा कालप्रतीक्षः प्रभुः ।
सद्यो यः श्रवणेक्षण–प्रणमन–ध्यानादिना दुर्लभं
दत्ते भक्तिरसं स एव भगवान् गौरः परं मे गतिः ॥११२॥

केचिद्दास्यमवापुरुद्धवमुखाः श्लाघ्यं परे लेभिरे
श्रीदामादिपदं व्रजाम्बुजदृशां भावं च भेजुः परे ।
अन्ये धन्यतमा धयन्ति मधुरं राधारसांभोनिधिं
श्रीचैतन्यमहाप्रभोः करुणया नो कस्य काः सम्पदः ? ११३॥

सर्वज्ञैर्मुनिपुङ्गवैः प्रवितते तत्तन्मते युक्तिभिः
पूर्वं नैकतरत्र कोऽपि सुदृढं विश्वस्त आसीज्जनः ।
संप्रत्यप्रतिमप्रभाव उदिते गौराङ्गचन्द्रे पुनः
श्रुत्यर्थो हरिभक्तिरेव परमः कैर्वा न निर्धार्यते ? ११४॥

वञ्चितोऽस्मि वञ्चितोऽस्मि वञ्चितोऽस्मि न संशयः ।
विश्वं गौररसे मग्नं स्पर्शोऽपि मम नाभवत् ॥११५॥

अहो वैकुण्ठस्थैरपि च भगवत्पार्षदवरैः
सरोमाञ्चं दृष्टा यदनुचर–वक्रेश्वरमुखाः ।
महाश्चर्य–प्रेमोज्ज्वलरस–सदावेश–विवशी–
कृताङ्गास्तं गौरं कथमकृतपुण्यः प्रणयतु ॥११६॥

कैर्वा सर्वपुमर्थमौलिरकृतायासैरिहासादितो
नासीद्गौरपदारविन्दरजसा स्पृष्टे महीमण्डले ।

हा हा धिग् मम जीवितं धिगपि मे विद्यां धिगप्याश्रमं
यद्दौर्भाग्यभरादहो मम न तत्सम्बन्धगन्धोऽप्यभूत् ॥११७॥

विश्वं महाप्रणयसीधुसुधारसैक-
पाथोनिधौ सकलमेव निमज्जयन्तम् ।
गौराङ्गचन्द्रनखचन्द्रमणिच्छटायाः
कञ्चिद्विचित्रमनुभावमहं स्मरामि ॥११८॥

जितं जितं मयाद्यापि गौरस्मृत्यनुभावतः ।
तीर्णाः कुमतकान्ताराः पूर्णाः सर्वमनोरथाः ॥११९॥

दन्ते निधाय तृणकं पदयोर्निपत्य
कृत्वा च काकुशतमेतदहं ब्रवीमि ।
हे साधवः सकलमेव विहाय दूराद्-
गौराङ्गचन्द्रचरणे कुरुतानुरागम् ॥१२०॥

पतन्ति यदि सिद्धयः करतले स्वयं दुर्लभाः
स्वयं च यदि सेवकीभवितुमागताः स्युः सुराः ।
किमन्यदिदमेव मे यदि चतुर्भुजं स्याद्वपु-
स्तथापि न मनो मनाक् चलति गौरचन्द्रान्मम ॥१२१॥

अहो न दुर्लभा मुक्तिर्न च भक्तिः सुदुर्लभा ।
गौरचन्द्र-प्रसादस्तु वैकुण्ठेऽपि सुदुर्लभः ॥१२२॥

सोऽप्याश्चर्यमयः प्रभुर्नयनयोर्यन्नाभवद् गोचरो
यन्नास्वादि हरेः पदाम्बुजरसस्तद् यद्गतं तद्गतम् ।
एतावन्मम तावदस्तु जगतीं येऽद्याप्यलंकुर्वते
श्रीचैतन्यपदे निखातमनसस्तैर्यत् प्रसङ्गोत्सवः ॥१२३॥

उत्ससर्प जगदेव पूरयन् गौरचन्द्रकरुणामहार्णवः ।
बिन्दुमात्रमपि नापतन्महादुर्भगे मयि किमेतदद्भुतम् ॥१२४॥

कालः कलिर्बलिन इन्द्रियवैरिवर्गाः
श्रीभक्तिमार्ग इह कण्टककोटिरुद्धः ।
हा हा क्व यामि विकलः किमहं करोमि
चैतन्यचन्द्र यदि नाद्य कृपां करोषि ॥१२५॥

कलिन्दतनयातटे स्फुरदमन्दवृन्दावनं
विहाय लवणाम्बुधेः पुलिनपुष्पवाटीं गतः ।
धृतारुणपटः पराकृतसुपीतवासा हरि-
स्तिरोहितनिजच्छविः प्रकटगौरिमा मे गतिः ॥१२६॥

आस्तां वैराग्यकोटिर्भवतु शम-दम-क्षान्ति-मैत्र्यादिकोटि-
स्तत्त्वानुध्यानकोटिर्भवतु भवतु वा वैष्णवी-भक्तिकोटिः ।
कोऽप्यंशोऽप्यस्य न स्यात्तदपि गुणगणो यः स्वतःसिद्ध आस्ते
श्रीमच्चैतन्यचन्द्र-प्रियचरणनखज्योतिरामोदभाजाम् ॥१२७

भजन्तु चैतन्यपदारविन्दं भवन्तु सद्भक्तिरसेन पूर्णाः ।
आनन्दयन्तु त्रिजगद्विचित्र-माधुर्य-सौभाग्य-दया-क्षमाद्यैः ॥१२८

ज्ञान–वैराग्य–भक्त्यादि साधयन्तु यथा तथा ।
चैतन्यचरणांभोज–भक्तिलभ्यसमं कुतः ॥१२९॥

हा हन्त हन्त परमोषरचित्तभूमौ
व्यर्थीभवन्ति मम साधनकोटयोऽपि ।
सर्वात्मना तदहमद्भुतभक्तिबीजं
श्रीगौरचन्द्रचरणं शरणं करोमि ॥१३०॥

सर्वसाधनहीनोऽपि परमाश्चर्यवैभवे ।
गौरांगे न्यस्तभावो यः सर्वार्थपूर्ण एव सः ॥१३१॥

ब्रह्मेशादि–महाश्चर्यमहिमापि महाप्रभुः ।
मुग्धबालोदितं श्रुत्वा स्निग्धोऽवश्यं भविष्यति ॥१३२॥

दृष्टं न शास्त्रं गुरवो न पृष्टा विवेचितं नापि बुधैः स्वबुद्धया ।
यथा तथा जल्पतु बालभावात्तथापि मे गौरहरिः प्रसीदतु ॥१३३

केचित् सागर–भूधरानपि पराक्रामन्ति नृत्यन्ति वै
केचिद्देव–पुरन्दरादिषु महाक्षेपं क्षिपन्ते मुहुः ।
आनन्दोद्भटजालविह्वलतया तेऽद्वैतचन्द्रादयः
के किं नो कृतवन्त ईदृशि पुनश्चैतन्य-नृत्योत्सवे ? १३४॥

अवतीर्णे गौरचन्द्रे विस्तीर्णे प्रेमसागरे ।
ये न मज्जन्ति मज्जन्ति ते महानर्थसागरे ॥१३५॥

प्रसारित–महाप्रेम–पीयूषरस–सागरे ।
चैतन्यचन्द्रे प्रकटे यो दीनो दीन एव सः ॥१३६॥

गीता–भागवतं पठत्वविरतं तीर्थानि संसेवतां
शालग्रामशिलां समर्चयतु वा कालत्रयं प्रत्यहम् ।
मुक्तिभ्यो महतीं पुमान्न लभते तत्कोषभूषाङ्करीं
भक्तिं प्रेममयीं शचीसुतपदद्वन्द्वानुकंपां विना ॥१३७॥

आशा यस्य पदद्वन्द्वे चैतन्यस्य महाप्रभोः ।
तस्येन्द्रो दासवद्भाति का कथा नृपकीटके ॥१३८॥

यस्याशा कृष्णचैतन्ये राजद्वारि किमर्थिनः ।
चिन्तामणिचयं प्राप्य को मूढो रजतं व्रजेत् ? १३९॥

माद्यत्कोटिमृगेन्द्रहुंकृतिरवस्तिग्मांशुकोटिच्छविः
कोटीन्दूद्भवशीतलो गतिजित-प्रोन्मत्तकोटिद्विपः ।
नाम्ना दुष्कृतकोटि-निष्कृतिकरो ब्रह्मादिकोटीश्वरः
कोटयद्वैतशिरोमणिर्विजयते श्रीश्रीशचीनन्दनः ॥१४०॥

अतिपुण्यैरतिसुकृतैः कृतार्थीकृतः कोऽपि पूर्वैः ।
एवं कैरपि न कृतं यत्प्रेमाब्धौ निमज्जितं विश्वम् ॥१४१॥

यदि निगदित-मीनाद्यंशवद् गौरचन्द्रो
न तदपि स हि कश्चिच्छक्तिलीलाविकाशः ।
अतुल-सकलशक्त्याश्चर्यलीलाप्रकाशै-
रनधिगत-महत्त्वः पूर्ण एवावतीर्णः ॥१४२॥

संसारसिन्धुतरणे हृदयं यदि स्यात्
संकीर्तनामृतरसे रमते मनश्चेत् ।
प्रेमाम्बुधौ विहरणे यदि चित्तवृत्ति-
श्चैतन्यचन्द्रचरणे शरणं प्रयातु ॥१४३॥

इति श्रीप्रबोधानन्द-सरस्वती-गोस्वामि-विरचितं
श्रीचैतन्यचन्द्रामृतं समाप्तम् ।

# श्रीरूपचिन्तामणिः ।

श्रीगौराङ्गचरणचिह्नानि ।

छत्रं शक्ति-यवांकुशं पवि-चतुर्जम्बूफलं कुण्डलं
वेदी-दण्ड-गदा-रथाम्बुज-चतुःस्वस्तिं च कोणाष्टकम् ।
शुद्धं पर्वतमूर्ध्वरेखममलोऽङ्गुष्ठात् कनिष्ठावधे-
र्बिभ्रद्दक्षिणपादपद्ममलं शच्यात्मज-श्रीहरेः ॥ १ ॥

शंखाकाश-कमण्डलुं ध्वज-लता-पुष्पस्त्रगर्धेन्दुकं
चक्रं निर्व्यधनुस्त्रिकोण-वलया-पुष्पं चतुस्कुंभकम् ।
मीनं गोष्पद-कूर्ममासुहृदयांगुष्ठात् कनिष्ठावधे-
र्बिभ्रत्सव्यपदांबुजं भगवतो विश्वंभरस्य स्मर ॥ २ ॥

अतिपुण्यैरतिसुकृतैः कृतार्थीकृतः कोऽपि पूर्वैः ।
एवं कैरपि न कृतं यत्प्रेमाब्धौ निमज्जितं विश्वम् ॥१४१॥

यदि निगदित-मीनाद्यंशवद् गौरचन्द्रो
न तदपि स हि कश्चिच्छक्तिलीलाविकाशः ।
अतुल-सकलशक्त्याश्चर्यलीलाप्रकाशै-
रनधिगत-महत्त्वः पूर्ण एवावतीर्णः ॥१४२॥

संसारसिन्धुतरणे हृदयं यदि स्यात्
संकीर्तनामृतरसे रमते मनश्चेत् ।
प्रेमाम्बुधौ विहरणे यदि चित्तवृत्ति-
श्चैतन्यचन्द्रचरणे शरणं प्रयातु ॥१४३॥

इति श्रीप्रबोधानन्द-सरस्वती-गोस्वामि-विरचितं
श्रीचैतन्यचन्द्रामृतं समाप्तम् ।

# श्रीरूपचिन्तामणिः ।

श्रीगौराङ्गचरणचिह्नानि ।

छत्रं शक्ति-यवांकुशं पवि-चतुर्जम्बूफलं कुण्डलं
वेदी-दण्ड-गदा-रथाम्बुज-चतुःस्वस्तिं च कोणाष्टकम् ।
शुद्धं पर्वतमूर्ध्वरेखममलोऽङ्गुष्ठात् कनिष्ठावधे-
र्बिभ्रद्दक्षिणपादपद्ममलं शच्यात्मज-श्रीहरेः ॥ १ ॥

शंखाकाश-कमण्डलुं ध्वज-लता-पुष्पस्रगर्धेन्दुकं
चक्रं निर्ज्यधनुस्त्रिकोण-वलया-पुष्पं चतुस्कुंभकम् ।
मीनं गोष्पद-कूर्ममासुहृदयांगुष्ठात् कनिष्ठावधे-
र्बिभ्रत्सव्यपदांबुजं भगवतो विश्वंभरस्य स्मर ॥ २ ॥

यवमंगुष्ठ-मूले च तत्तले चातपत्रकम् ।
अंगुष्ठ-तर्जनी-सन्धिभागस्थामूर्ध्वरेखिकाम् ॥ ३ ॥

सुकुञ्चितां सूक्ष्मरूपां स्मर रे मे मनः! सदा ।
तर्जन्यास्तु तले दण्डं वारिजं मध्यमा-तले ॥ ४ ॥

तत्तले पर्वताकारं तत्तले च रथं स्मर ।
रथस्य दक्षिणे पार्श्वे गदां वामे च शक्तिकाम् ॥ ५ ॥

कनिष्ठायास्तलेऽङ्कुशं तत्तले कुलिशं स्मर ।
वेदिकां तत्तले व्याघ्रां तत्तले कुण्डलं ततः ॥ ६ ॥

एषां चिह्नतले दीप्तं स्वस्तिकानां चतुष्टयम् ।
अष्टकोण-समायुक्तं सन्धौ जम्बू-चतुष्टयम् ॥ ७ ॥

असव्यांघ्रौ महालक्ष्म स्मर गौरहरेर्मनः ।
अथ वामपदांगुष्ठ-मूले शंखं तले पविम् ॥ ८ ॥

मध्यमा-तलयाकाशं तद्द्वयाधो धनुः स्मर ।
गुणेन रहितं चापं वलयां मणिमूलके ॥ ९ ॥

कनिष्ठायास्तले चैकं सुशोभन-कमण्डलुम् ।
तस्य तले गोष्पदाख्यं सत्पताकां ध्वजां पुनः ॥१०॥

चिन्तय तत्तले पुष्पं वल्लीं तस्य तले स्मर ।
गोष्पदस्य तलेऽप्येकं त्रिकोणाकृतिमण्डलम् ॥११॥

चिन्तय तत्तले कुंभान् चतुरः सुमनोरमान् ।
तेषां मध्ये चार्धचन्द्रं तले कूर्मं सुशोभनम् ॥१२॥

शफरीं तत्तले रम्यां तस्यापि दक्षिणे पुनः ।
कूर्मस्य तुल्यभागे तु निम्ने घटतलेऽपि च ॥१३॥

मनोरमां पुष्पमालां स्मर वामांघ्रि-पंकजे ।
इति द्वात्रिंशच्चिह्नानि गौराङ्गस्य पदाब्जयोः ॥१४॥

इति श्रीमद्विश्वनाथ-चक्रवर्तिठक्कुर-विरचितः
श्रीरूपचिन्तामणिः समाप्तः ।

# श्रीगौराङ्गविरुदावली ।

देवैस्तथा श्रुतिगणैर्महिमा न यस्य
प्रज्ञायते प्रभवता भवतापि कृत्स्नः ।
दुर्वाङ्मलीमसमतिर्मनुजः कथं स्यात्
श्रीगौरचन्द्र ! भवतः स्तवनेऽस्य शक्तः ॥ १ ॥

तथापि जगदीश्वर स्तवनमाचराम्येष यद्
यथामति कृपावशः श्रुतिपथं सवृत्तन्नय ।
अचक्षुरशुभस्वरो नदति कोऽपि यच्चातकः
शृणोति न हि किन्तु तत् करुणबुद्धिरंभोधरः ॥ २ ॥

१। चण्डवृत्तस्य नखे वर्धितम् ।

सत्यपरमसुख शुद्ध समुज्ज्वल नित्यरुचिरतर विश्वगपुद्गल
सर्वविबुधवरबुद्धिसुदुर्गम सर्वहृदयगत निर्मल विभ्रम
विप्रजननमभिलब्धसमुद्भव वप्रहृदयधृतवृद्धिमदुद्भव
निर्जरविरचितदिव्यमहस्तव दुर्जरकलिमलशष्पबृहद्दव
दुष्ठुचरितनरदुर्लभदर्शन सुष्ठुहृदयजनदत्तविमर्शन
नर्मविहृतिपरित.र्पितसत्तम शर्मकरण मम चित्तभुवि भ्रम ॥३॥

सेवकचातकसुखदा कलिदवदवथुप्रशान्तिकृच्छीता ।
नामोत्कीर्तनवृष्टि स्तव जीयात् श्रीशचीसुतांभोद ॥ ४ ॥

भजनावर्तन सदनानर्तन ।
जगतीरक्षक कलिभीतक्षक ॥ धीर ॥ ५ ॥

२। वीरभद्रः ।

स्फुटत्कनककेतकीकमलकेशरांगद्युतौ
शरच्छशधरच्छटामदविडंबिरम्याननने ।
स्फुरत्सुरतरंगिणीतटविहारशीले प्रभौ
ममास्तु रतिरुत्तमा भवति गौरचन्द्रानिशम् ॥ ६ ॥

उद्यद्विद्युद्द्युतिकृतजनसुख नव्यस्तव्यद्विजपतिवरमुख
फुल्लाचिल्लिप्रसितयुवतिकुल दृष्टि स्पृष्टिस्थगितहृदयबल ।
तप्तत्रप्तप्रबलभुजगभुज हस्तन्यस्तस्फुटतरसरसिज ।
बिभ्रत् शुभ्रस्रजमुरसि सुभग नित्यप्रत्यग्रविशदपटयुग ।
रक्तव्यक्तस्मितवरशतदल–बद्धस्पर्धप्रमसृणपदतल ।
पुष्यत् पुष्पस्रगधिक रुचिधर मय्यक्षय्यप्रणयमभिवितर ॥देव॥

श्रीवासांगनमध्यदुग्धजलधौ सद्भक्तमीनाकुले
भ्राम्यन् कीर्तनसत्सुधां प्रकटयन् संसाररोगापहाम् ।
शुद्धस्वर्णतनुच्छटासमुदयैर्विद्योतयन् दिक्तटीः
श्रीगौराभिधमन्दरः प्रणयतान्मन्नेत्रचित्तोत्सवम् = ८ ॥

विस्फारमाधुर्य दुष्पारताधुर्य ।
सुप्रातषाड्गुण्य विख्यातसाद्गुण्य ॥धीर ॥ ९ ॥

३। समग्रः ।

आविर्भूता धरणिवलये श्रीनवद्वीपमेरोः
कुन्दश्रेणीपरिभवरुचिः शीतला तापहन्त्री ।

गानाद् ध्यानात् सकलकलुषस्तोमहर्त्री त्रिलोकीं
श्रीगौरांग प्रभुवर भवत्कीर्तिगंगा पुनाति ॥१०॥

अदभ्रसुन्दर स्वचित्तकन्दर-प्रविष्ट किंकर-प्रकृष्टशंकर ।
स्वभक्तवन्दन-प्रवृत्तचन्दन प्रशस्त चंचल-भ्रमद् दृगंचल ।
प्रजल्पखण्डितप्रगल्भपण्डित-स्थविष्ठ दंभक स्वभक्तिलंभक॥देव॥

पापानि प्रतिगृह्य माधवजगन्नाथाख्ययोर्विप्रयो
स्ताभ्यां कारुणिकः सुदुर्लभतरां यः प्रेमभक्तिं ददौ ।
पुण्यस्यैव समर्पणेन सुजने कुत्रापि संतुष्यता
लोके नाप्यमरेण गौर भवतस्तस्योपमा संभवेत् ॥१२॥

कलिभीखण्डक धरणीमण्डक जननीकिंकर गृहिणीशंकर ॥धीर॥

४। अच्युतः ।

गभीरगुरुगर्जनैर्दुरितदृप्तदन्तावलान्
मनोजमदमत्सरप्रबलभल्लमल्लानपि ।
निरस्य विषयैषणावृकविमर्दिनामन् नृणां
सदा हृदयकन्दरे निवस गौरपारीन्द्र हे ॥१४॥

जय जय गौर प्रियतमपौर-व्यसनसुचौर स्फिरनवसौर-
च्छविवरवास श्वटुलविलास प्रमुदितदास व्रजकृतरास ।
स्फुरदलिजाल प्रतिभटबाल द्युतिजितताल द्विजपतिभाल ।
श्रितशुभवेश स्मितशशिलेश प्रमुदितदेश प्रणयि महेश ।
द्विजसुत सीर-ध्वजनुत नीर-म्रदित पटीर स्थगितशरीर ।
क्षितिसुरजात क्षितिनुतमात व्रजरसदात स्तबकितशात ॥देव॥

निजजनपरिवीते देववर्गेण गीते
प्रकृतिबलमतीते प्रेमभक्त्यभ्युदीते ।

रतिरघकृतभीतेरस्य संत्यक्तनीते
रपि शशिशतशीते श्रीहरौ मेऽस्तु पीते ॥१६॥

गंगावरतट रंगातुलनट कंपाकुलतर शंपारुचिधर ॥धीर॥१७॥

५। उत्पलम् ।

खलबलिकलिकालस्थूलहेलिप्रतप्तं
जगदिदमतिधृष्णक् तृष्णया नष्टचेष्टम् ।
परिलसदनुकंपादृष्टिसंपातवृष्ट्या
शिशिरितमकरोद् यो गौरमेघं तमीडे ॥१८॥

अद्भुत शक्तिक शिक्षित भक्तिक विद्रुत कर्बुर कम्रवपुर्धर ।
पद्मविनिर्जय वित्तपदद्वय दिव्यगभस्तिक हृद्रतसक्थिक ।
वत्सतिरस्कृत रुक्मजपर्वत नव्यतटस्थल भर्मसदर्गल
सुष्ठु भुजद्वय शुभ्ररुचिस्मय मर्दिमृदुस्मित पुष्करसंमित-
वक्त्र परिस्फुरदुत्तमचर्चर वर्धित सज्जन तर्जितदुर्जन
बुद्धिसुखर्वित-दिग्जयिगर्वित ॥ देव ॥१९॥

नामोत्कीर्तनगर्जितैर्निजजनान् संमोदयन् केकिनो
राधाकान्तिघटासमावृतरुचिः संक्लेशसन्तापहृत् ।
संसारे मरुनीवृति स्थितमिमं मल्लक्षणं पादपं
श्रीविश्वंभरमेघ ! सिंच करुणापानीयवृष्ट्या सकृत् ॥२०॥

चातुरीक्लृप्त माधुरीतृप्त-गेहिनीचित्त मेदिनीवित्त
धिकाशुद्ध भावभारुद्ध चारुधीवश्य मामये पश्य ॥धीर॥२१॥

६। तुरङ्गः ।

झषध्वजधनुर्धियं विदधती वधूनां दृशां
द्रढिष्ठधृतिदर्दुरीदमनदीर्घदर्वीकरी ।

भ्रमद्भ्रमरसंचयभ्रमभरं भृशं बिभ्रती
भिनत्तु भजतां भयं भवभवं भवद्भ्रूः प्रभो ॥२२॥

नन्दितहरिविधिशंकर किंकर निकर शुभंकर ।
चंपककुसुमविनिन्दकमंगलतनुरुचिनन्दक ।
चन्दनमृगमदरंजित कुंकुमघनपृषदंकित ।
चन्द्रविजयिमुखमण्डल पंकजसदृशदृगंचल ।
दन्तविजितनवकुन्दक कण्ठतुलितवरकंबुक ।
सुन्दरतरभुजदण्डक सन्ततभवभयखण्डक ।
नन्दिहृदुरसि विलंबितमंजुलमणिसरमण्डित ।
मंजुवसनयुगसंवृत वंजुलसुम-समलंकृत ।
संगतकरुणपुरन्दर संप्रति मम हृदि संचर ॥देव॥२३॥

चरिततर्पितपद्मजशंकरे कलिदवार्तमनुष्यशुभंकरे ।
त्वयि दधत्यमलं कमलं करे मम मनोऽस्तु सदाऽघभयंकरे॥२४॥

जय चारु धाम जितरूपिकाम परिगीत नाम-चरिताभिराम॥धीर॥

७। गुणरतिः ।

लक्ष्मीललितविलोचनमधुलिन्मोदनमुखामलांभोजः ।
तापहरः सुखदायी जयति श्रीगौरकासारः ॥२६॥

अवनीतलगत जननीपदनत करुणार्द्रहृदय शरणागत भय-
दमने पटुतर शमनेक्षणहर दुरितान्वितजन शुचितासुघटन ।
दलिता मलवर हरितालरुचिर मदनाबुंदमद दलनातुलपद ।
तरुणीमणि निज गृहिणी प्रियभुज कदनार्दनकर वदनामृतकर ।
सुमनोजनचय–सुमनोऽर्चित जय ॥ देव ॥२७॥

अवतीक्ष्णलेशमात्रतो भवतीव्रव्यथयार्दितान्नरान् ।
यूवतीजनचित्तमोहने भवतीह प्रथतां रतिर्मम ॥२८॥

सुन्दर निन्दित कुन्दरदस्मित
नन्दितसज्जन सन्दितदुर्जन ।
सिन्धुरविक्रम बन्धुर विभ्रम ।। धीर ।।२९

८। मातंगखेलितम् ।

गौडपूर्वगिरिमूर्ध्नि सूद्यता कुन्दकंबुसमशुभ्रशोचिषा ।
दीप्यते जगदिदं तमोन्नता गौर तावकयशः सुधांशुना ।।३०।।

श्रीशचीतुन्द सागरामन्द-भेश हेत्यन्त-मोहितानन्त-
यौवता नंग खेलितासंग नाशितातंक लोभिताशंक
सेवितानन्द गीतगोविन्द-गानसानन्द मानसाशन्द
पातकासंगिशोधने रंगि-दास पाषण्ड-शेमुषीखण्ड-
कारकानंक सोमभापंक कीर्तिका व्यंग शोभनोत्संग ।
चारुतामंच मे मनोभ्यंच ।। देव ।।३१।।

भृंगांगनारुचि पतंगसुतासुसंगद्
गंगातरंगकृतरंग सदंगभंग ।
आनन्दितद्विजपुरन्दर मन्दमन्दं
मां गौरचन्द्र ननु नन्दय शं ददानः ।।३२।।

पण्डितगण वन्द्यचरण भक्तिनिपुण वर्णित गुण ।।देव।।३३।।

९। तिलकम् ।

ऊर्ध्वे बाहुयुगे सुचारुमुरलीं मध्येऽब्जशंखौ तथा
ऽधस्थे चक्रगदे दधत् प्रकटयन्नत्यन्तचित्रं वपुः ।
नित्यानन्दमनन्दयन्निजमहैश्वर्येक्षणायोत्सुकं
सोऽयं मे दयतामगम्यचरितो गौरो हरिः षड्भुजः ।।३४।।

धरणिविबुधकुलपंकजदिनकर ।
निजजनकुमुदशुभंकरशशधर।

कलि मदकलकरि दण्डन हरिवर ।
सुकृति दवथुदव खण्डन जलधर ।
चरणयुगल रुचिनिन्दित सरसिज ।
निरुपम करिकर वन्दित वरभुज ।
सितरुचि तनुपट संवृत रुचिभर-
परिविलसदुरसि संभृतमणिसर ।
मुखरुचिजित शरदिन्दुनलिनभग ।
रस विगलदुदक बिन्दु नयन युग ।
मसृण कुटिलतर कुन्तल शशि सम-
विसृमर किरणकदन्त कृपय मम ।। देव ।।३५।।

गौरहरे तव करुणामृतवर्षणतो महीतले सकले ।
भक्तिलता प्रसृमरतां प्राप्ता नानाफलं फलति ।।३६।।

शंकर वन्दित पण्डित नन्दित चंगिम रंजित मण्डन मण्डित।।धीर

चण्डवृत्तस्य विशिखे पंकेरुह कलिका ।

१०। पंकेरुहम् ।

लक्ष्म्यालंकृतमंगं कलयन् शंखं करे तथा कमलम् ।
द्विजपुंगवसंगरतो गौरांग त्वं विभासि शार्ङ्गीव ।।३८।।

जय कलिपंक क्षपण सुटंक-प्रभ गुणसंघ द्विपकरजंघ
प्रविलसदंग द्युतिजित चंग स्फुटशण रंग प्रबल भुजंग-
द्रुजक पतंगप्रभ निज संग प्रपवितवंग द्विज परिरिंगत्
सुरसरिदिंग्रन्मधुरतरंग प्रथित सुतुंग द्रवभवभंग
क्षमहरि संकीर्तन गत पंकी-कृत जल गंगा तट वर रंगा-
हित सुख देव ।। वीर ।।३९।।

इंगत्तुंगतरंगसंगमन सद्गंगातटप्रांगणे
रिंगन् संगिगणैरनंगविजयं कुर्वन् निजांगश्रिया ।
संगीतेन सुरांगनासु जनयन् स्विन्नांगतासंगतिं
गौरांगो नटपुंगवो मम मनोरंगस्थलं गाहताम् ॥४०॥

चरितसुखित विधि शंकर हलधर ।
विमल कनकमय पंकज रुचिभर ।
दशनवसनजित रंगण कुसुमक ।
चलनतुलितसुमतंगजगमनक ॥ धीर ॥४१॥

११। सितकञ्जम् ।

नरलीलाहितदुष्टवंचने कृतराधाप्रणयप्रपंचने ।
नृहरौ भाजितशुद्धकांचने रमतां मे मतिरुत्तमांचने ॥४२॥

जय समुदंचत् परिमल चंचन् मधुप करंज द्रुमसुमपुंज
स्रग धिकमंज्वम्बुज नव किंजल्करुचिर गंज ज्वलदघखंज-
द्विजगदसंचूर्णक शुकचंचूत्तमनस चिंचा तरुतलमंचा-
सन शिखिपिंछा सितकचसंछादितमुखकंजोज्ज्वल रससंजो-
षक वर मंजी रकरवसंजीवितजनगुंजा घनतटकुंजा-
हित रस देव ॥ वीर ॥४३॥

कांचनारकृतकर्णभूषणं कांचनातिजयि कान्तिभृत्तव ।
कांचनातिसुषमां दधद्वपुः कांच नाम न विमोहयेद्वधूम् ॥४४॥

कलिकुभुजंगमजंगमविषहर
मुखजितपंकज पंकज पदकर-
सुकलित हंसक हंसकसुगमन ।
मधुर रसंगत संगतनिजजन ॥ धीर ॥४५॥

१२। पाण्डूत्पलम् ।

दण्डितदिग्जयिपण्डित खण्डितपुण्ड्रप्रचण्डयमदण्ड ।
ताण्डवमण्डितगंगातटमण्डन खण्डयाघं मे ॥४६॥

जय शशि तुण्ड प्रियजन चण्डद्युति सुतदण्ड क्लमभय खण्ड
स्फुटतरझिण्टी द्युतिभर सण्टीकनरुचि कुण्ठी कृत गज कण्ठी-
रवसुपिचिण्डातिशय वितण्डा क्षितिकर पण्डा जित बुधशण्डा।
परगृहशण्ढा दरनुतदण्डीश्वरपद चण्डीशमहित हिण्डी-
रकपट खण्डीकृतकलिभण्डा मलशशिखण्डालिकतट देव ॥वीर॥

दोर्दण्डद्वयचण्डचालनभरात् पापाण्डजान् डाययन्
पाषण्डावलिमुण्डमण्डलमतीवाखण्डयन्नंघ्रिणा ।
काण्डे दण्डमपि प्रमण्डयतु मे मार्तण्डकोटिच्छवि-
गौरस्ताण्डवपण्डितोऽलिकलसत्पुण्ड्रो मनोमण्डपम् ॥४८॥

चण्डाल पाषण्डदुश्श्रेष्ठताखण्ड कंबूल्लसत्कण्ठ भक्त्यर्पणाकुण्ठ ॥धीर॥

१३। इन्दीवरम् ।

बन्धिवन्दीवरनन्दी मायाबन्धान्धकारसन्दमनः ।
मिश्रपुरन्दरनन्दनचन्द्रश्चन्दयति सन्ततं विश्वम् ॥५०॥

जय महदन्तः स्फुरित सदन्त व्रतकलिहन्तः सकलनियन्त-
र्व्रजरससन्तर्पितजन दन्तद्युतिजितकुन्द स्फुरदरविन्द
प्रभमुख सन्तायित सदनन्ता मरसुखचिन्तामयदवसन्ता-
पितजनकन्दाब्जजमुखवृन्दारकनुत भन्दात्मकगुणवृन्दा-
तुलदृढसन्धा मलशुभगन्धाढ्य शरणबन्धो नवरस सिन्धो
जय जय देव ॥५१॥

चन्द्रेन्दीवरकुन्दशीतलतरं सन्तापसंशान्तिकृत्
सौन्दर्यात्म्यमरन्दमन्दिरमिदं सौगन्ध्यसन्धारकम् ।
भक्तेन्दिन्दिरवृन्दनन्दि मृदुलं रात्रिन्दिवं दीप्यतां
श्रीगौरेन्दुपदारविन्दयुगलं मत्स्वान्तवेशन्तके ॥५२॥

अंबुजभवमुखविबुधसुवन्दित
कंबुविजयिगल निजरतिनन्दित ।
शंबररिपुरिपुनुत रुचिनिन्दित
शंबररुहपद सहृदयवन्दित ॥धीर॥५३॥

१४। अरुणाम्बुरुहम् ।

दंभादिककुंभीरं वीक्ष्य भयंकरमिमं भवांबुनिधिम् ।
मां भीतं विश्वंभर कंपितमनुकंपया पाहि ॥५४॥

जय नव चंप स्फुटशण संपत्
स्थिरतर शंपा जयि रुचि संपा-
त सदनुकंपा कृतवरकंपा
कुलित निर्लिपा वलि नुति संपा-
दित सुख लंबार्चित पद कंब्वा-
कृतिगल जंब्वाभ चिकुर शंबा
खिल जगदंबापदनत लंबा-
लकमुख जंभा हित सुख संभा
वनपर दंभान्वितजन संभा-
षविमुख रंभा समभुज जृंभा
परिलसदंभोजवदन कं भोः
कुरु मम देव ॥५५॥

संवीतोऽम्बुजसंभवादिविबुधैर्नारं वहद्भिर्वपुः
प्रालंबं सुमनःकदंबवलितं बिभ्रत् पदे लंबितम् ।

संवीयांबरमंबुदद्युतिवरं नीलांबुजं भ्रामयन्
श्रीविश्वंभर ! संविभाहि भगवंस्त्वं मे हृदंभोरुहे ॥५६॥

॥ खण्डितवलिकलिदंभक पण्डितमतिसुखलंभक ।
रंजकजनपरिरंभक जंजपकहृदुपलंभक ॥ धीर ॥५७॥

१५। कह्लारम् ।

खल्यानल्याबहुला मृदूनल्लौल्यादिकोल्लसद्वल्लीः ।
गौडाचले सुकल्यो गौरद्विपतल्लजः समुल्लसति ॥५८॥

विमलित भिल्लान्धकखशझल्लाऽतुल नवमल्ली वरगिरि मल्ली
कुसुममतल्ली मणिसरवल्लीवलयित चिल्ली चलनसुभल्ली-
विदलितसल्लीलयुवति पल्ली-हृदय कदल्यार्चितभुज हल्या-
हृत पद खल्या सुनिबिड नल्या-दहन शकुल्या कृतिदृग तुल्या-
नन रसकुल्या वितवरकुल्या-गम कलिशल्योद्धरण सुकल्यो
ल्लस हृदि देव ॥५९॥

कल्लोलेन तटस्थवल्लिवलयं प्रोल्लासयन्त्युल्बणं
प्रेम्णा हल्लकतल्लजेन सुखकृल्लावण्यमुल्लंभिता ।
लीलोल्लालितभक्तबुद्धिनलिनोवल्लीमतल्लीकुला
श्रीविश्वंभर लालसीति तव सल्लीलालिकल्लोलिनी ॥६०॥

दुर्लभपादांबुजयुग सुवशितवल्लभनामावनिसुरवरसुत
वल्लभबालारतिरुचिसुवलित पल्लवशोभाजयिकरविलसित ॥धीर

१६। चम्पकम् ।

कल्याणधारामृतवर्षशीले कन्याननांभोरुहमर्दिलीले ।
सल्लोकशोकान्धहृतावतन्द्रे मल्लोचनं रज्यतु गौरचन्द्रे ॥६२॥

वल्लभदुहितृवल्लभ महितृ सज्जनभवक दुर्जनलवक ।
मन्दरशिखर सुन्दर नखर भर्त्सितविधुक कुत्सितमधुक
सुस्मयसहित विस्मयरहित शंकरमहित किंकरसुहित ।
कुक्कुरसदय ठक्कुर सदय सज्जितवदन लज्जितमदन ।
खण्डितकुनय पण्डितविनय नन्दय जगद् मन्दय भगद ॥देव॥

कीर्तनविलासकर्त्रे कलिबलहर्त्रे प्रियारुचिं धर्त्रे ।
गंगापुलिनविहर्त्रे नमोऽस्तु विष्णुप्रियाभर्त्रे ॥६४॥

सन्दमित कुन्दवृन्दरद शन्द ।
सन्दयितमन्द भन्दकुलकन्द ॥ धीर ॥६५॥

१७। वंजुलम् ।

भो विश्वंभर सार्वभौम भवतो भक्ता महासैनिकाः
कारुण्याभिधदिव्यकांचनरथारूढा भ्रमन्तो भुवि ।
त्वत्संकीर्तनबाणसन्ततिमहावृष्टिं तथा तन्वते
येन व्याकुलिताघसैन्यनिकरः कुण्ठत्वमाप्तः कलिः ॥६६॥

जय कलि सिन्धुरदलन सुबन्धुर-
हरिवर मंजुलविचकिल वंजुल
विरचितमण्डन कुमतविखण्डन ।
करिकरगंजनभुज जनरंजन
गुणचय पण्डित जनगणमण्डित
सदर्दितिनन्दन कुलकृतवन्दन ।
मणिमयकंकण निजपदकंकण
हतजडजंगम दुरितभुजंगम-
गरलक चंचल मधुरदृगंचल ।
कुरु मम शं प्रतिदिशमयि संप्रति ॥ देव ॥६७॥

गौडांबरान्तरुदयन्निजभक्तवृन्द-
स्वान्तेन्दुकान्तनिकुरंबकमुन्दयन् द्राक् ।
मोहान्धकारनिकरं दमयन् समन्तात्
श्रीगौरचन्द्र तव नन्दति कीर्तिचन्द्रः ॥६८॥

प्रियजनवाटी व्रजरसनाटी-
कृतिपरिपाटी सुखित कणाटी-
लनयन ॥ धीर ॥६९॥

१८। कुन्दम् ।

हंसान् मानसघनरसरसनोत्कण्ठाकुलान् कुर्वत् ।
सारंगरंगजनकं तव कीर्तनगर्जितं जयति ॥७०॥

मिश्रकुलपद्ममित्र गुरुसद्म-लब्धवरविद्य शुद्ध निरवद्य
वन्द्यजननम्र भक्तिरसकम्र भव्यबुधवर्ग दिव्यसुखसर्ग ।
क्लृप्तकलिधर्म दृप्तखलमर्म तप्तिकृतिशक्त बन्धुजनरक्त
तृप्तसुरसंघ रुच्यतरजंघ सक्थिजितशुण्ड पद्मजयितुण्ड
मंजुकचमुण्ड रम्यरुचिकुण्ड चित्तहरहस्त सर्वगुणशस्त
शर्वसमनृत्यकृष्टनिजभृत्यवर्ग मतिमंचमद्य मम चंच ॥देव ॥

गौरचन्द्र तव कीर्तिचन्द्रमाश्चित्रतां वहति विश्वमोहिनीम् ।
चेद् गिलत्यलमयं सदातमः कृष्णपक्षमनु वर्धते हि यत् ॥७२॥

अद्वैतभूदेवहुंकारसंभूत माधुर्यलंकार ।
सच्छीलपीयूषभृंगार पुण्यौघसंक्लृप्तशृंगार ॥ धीर ॥७३॥

१९। बकुलभासुरम् ।

सन्नाशयन् कुवलयस्य दुरन्तदुःखं
प्रोल्लासयन् प्रियतमां क्षणदां नितान्तम् ।

स्वीयोदयेन दलयंस्तमसां समूहं
　　देदीप्यते जगति गौरविधुः प्रकामम् ॥७४॥

जयजयसुरतटिनीतटभावक भावकरिपुकलिदलन सुसज्जित
सज्जितहृदय मधुपललितालक तालकवर्ण हृदयहरतारक ।
तारकनामोत्कीर्तनकारक कारकगुण भुजजित भुजगोरस
गोरससदृशवलक्षयशोधर शोधरहितजनपापविदारक ।
दारकरांचित विगत विपल्लव पल्लवशोभाजयिपदसारस ।
सारसनोज्ज्वल सकलमनोहर नो हर भव साध्वसमतिसुन्दर ॥देव॥

भवता भवतापहारिणा यदि नोदैष्यत गौर भूतले ।
कलिता कलितापतो व्यथा कथमाप्स्यद्विरतिं तदा नृणाम् ॥७६॥

विहितकलिभंग सततनुतगंग ।
चरणनतरंक निहतभवशंक ॥ धीर ॥७७॥

२०। बकुलमङ्गलम् ।

श्रीराघवेन्द्रनिजवैभवदर्शनेन
　　श्रीमन्मुरारिकविमौलिरतोषि येन ।
तस्यातिदुर्गविभवस्य तव स्वरूपं
　　शक्नोति वर्णयितुमत्र न कोऽपि मर्त्यः ॥७८॥

त्वं धृतगौरव गौर वचोमृततर्पित सज्जन सज्जनटोपम ।
नैकविभक्तिक भक्तिकथामृत सेवकितामर तामरसेक्षण ।
पण्डितशातद शातदशात्रय साध्वनिशावक शावकवेष्ठित
सत्सुखसंचय संचयनोद्यत सर्वशुभालय भालयशोयुत ।
दिव्यकचामर चामरवीजित गोपवधूरसधूरसनोत्सुक ।
कान्तिजितालक तालकरंबित गीतमनोरम नो रमयातुल ॥देव॥

श्रेयः षडिन्द्रियजयं च सलोकतां च
हानेरभावमपि दासजनेषु दत्त्वा ।
उष्मार्पकोऽपि भगवंस्तुहिनीकरोषि
त्वं तान् पुनस्तदिति भासि विचित्रचर्यः ॥८०॥

स्वहृदिशयित सुजनदयित ।
सततमुदित जगति विदित ॥ धीर ॥८१॥

२१। मंजर्याः कोरकः ।

त्वत्केशपाशो ननु गौरचन्द्र स्याच्छंबरारेः किमु पाश एव !
यतो वधूनामिह दृक्कुरंगा निपत्य नोत्थातुमलं भवन्ति ॥८२॥

भवतः प्रभावभानौ भुवनेभ्युदिते भयोद्भ्रान्ताः ।
पाषण्डिपेचकौघा नो जाने बत पलायिताः कुत्र ॥८३॥

गौर वयत्कलिकालभयंकरभैरव पीडितलोक शुभंकर ।
भिक्षितमाधवपापकदंबक शिक्षितभक्तिकथानिकुरंबक !
हे वनमालिमहीसुरतर्पक यौवनशालिवधूधृतदर्पक ।
तामरसद्युतिहारक चंचल कामरसार्पणकारिदृगंचल ।
अंगविनिर्जितनिर्मलहाटक रंगविराजि मनोहरनाटक ।
शोधित दुर्मति दुष्कृति पुण्ड्रक गोधितलोज्ज्वल चन्दन पुण्ड्रक
धन्यमति प्रियवर्ग सुसंचितवन्यमनोहरमालिकयांचित ।
पामरतारक चारुकृपालय नामरसप्रिय मामनुपालय ॥देव॥

क्षिप्तोच्चण्डकपालखण्डदलितश्रीपादमुण्डे सति
क्रोधाच्चक्रमधारयत् सरभसं यो माधवे घ्नन्नमुम् ।
तस्मिन्नेव पुनः प्रयाति शरणं तद्दुष्कृतानां ततिं
यो जग्राह स दक्षिणोऽवतु सदा गौरस्य पाणिर्जगत् ॥८५॥

त्रासित मन्दर भासित सुन्दर-
गौरभ वंजुल सौरभ मंजुल ॥ धीर ॥८६॥

२२। गुच्छः ।

कृतगौरव गौर बन्धुभिर्ललितोदारक दारकप्रिय ।
अनुकंपय कंपयश्चयक्षरणे मेघ नु मेऽघनुद्भव ॥८७॥

जयकनककेतकीनवकुसुमपत्रक-
व्रजविकचचंपकद्युतिविजयिगात्रक ।
स्फुटदरुणपद्मिनीकुसुमविजयोद्भट
प्रपद नवयामिनीपतिजयिनखच्छट ।
द्विरदकरसुन्दरोरुयुग जगदुत्तम-
कृशिमसुवलित्रयीसुभगतममध्यम ।
त्रिदशगृह भूधरप्रतततरसत्तट
प्रविलसदुरःस्थल द्विजपतिसद्दक्पट
द्वितयपरिशोभित द्विपकरसुहृद्भुज
प्रणयरसमाधुरी मधुरवदनांबुज
प्रकृतिमधुरेक्षणोन्नतरुचिरनासिक
प्रचलदलिमण्डली ललिततमकैशिक-
च्छुरितमणिमण्डनोज्ज्वल कृपय रंजय
प्रभुवृषभ ! मामिमं विहितदुरितं जय ॥ देव ॥८८॥

माल्यश्रीवलयितदिव्यकेशजालः
श्रीखण्डद्रवतिलकप्रकाशिभालः ।
गौरो मे मनसि यदि स्फुरेत् स पालः
किं तर्हि प्रखरतरः करोतु कालः ? ८९ ॥

खर्वस्मितधर गर्वक्षयकर सर्वक्षणमय सर्वस्तुत जय ॥धीर॥९०

२३। कुसुमम् ।

निःसारयन् दुरितदुष्टमृगानशेषान्
संत्रासयन्नतिबलं कलिकुंजरं द्राक् ।

त्रैलोक्यकाननतले विजयं करोति
श्रीगौरसिंह तव कीर्तनदिव्यनादः ॥९१॥

दुरितनिवहदहनमुदिर कुमतितिमिरनिकरमिहिर ।
भजनरसनसलिलजलद विबुधहृदयलसितफलद !
धरणिसुखदचरणयुगल सुरुचिविजितविकचकमल ।
विमलरजनिरमणनखर किरणदमिततिमिरविसर ।
कुमुददयितविजयिवदन नयनचलनजनितमदन ।
विलसदलिकसुभगतिलक मधुपविततिविचलदलक ।
चिकुरविजितचमरविसर करुणनयनमिह नु वितर ॥देव॥९२॥

श्रीश्रीनिवासदयितः स सर्वचक्षुः श्रवःसुखकृत् ।
विनतानन्दनवर्धी गौरो द्विजमणिरहो भाति ॥९३॥

अमरह्लादिनीकूलग वनिताधृतिहृत्सौभग ।
निजनामघटागायक भजनामृतसन्दायक ॥धीर॥९४

२४। त्रिभंग्यां दण्डकत्रिभङ्गी ।

कुवलयमदः प्रकामं स्वस्योदयतो विदार्यते येन ।
मदयन् स पुण्डरीकं गौरशरीरो हरिर्जीयात् ॥९५॥

नीरागा अपि रागं निर्दर्पा अपि सदर्पकताम् ।
गौर ! जनास्त्वत्कृपया निर्मायाा अपि समायतां यान्ति ॥९६॥

जहति भवभयं स्मरन्तो जपन्तो गृणन्तो नमन्तो
ऽर्चयन्तो भजन्तो धियन्तो मृशन्तः स्पृशन्तोऽपि यम्
यदधिकरणकं कृशत्वं बृहत्त्वं महत्त्वं सहत्वं
बुधत्वं शुभत्वं सुसत्त्वं समत्वं मृदुत्वं वरम् ॥

तमशुभदहनादवन्तं त्रसन्तं भवन्तं मुदन्तं
व्रजन्तं नमन्तं च सन्तं पतन्तं जनम् ।
मनसिजनिकरात् सुकान्तं प्रशान्तं सुदान्तं
महान्तं नितान्तं विभान्तं नतान्तं सुपान्तं सतः ॥
निजभजनरसं ददानं सदानन्तमानन्दगानन्दधानं
समानं प्रधानं विधानं निधानं श्रियाम् ।
शरणमहमये भवन्तं सुदन्तं सदन्तं द्दगन्तं नुदन्तं
स्तुवन्तं द्विषन्तं चेतन्तं नयन्तं मुदम् ॥
भवसलिलनिधावसारेऽप्यपारे व्यथारे
भयारेजकारेऽसि तारेशवारेड्यहारेद्धभाः ।
निपतितमव मां महेशामरेशार्च्यवेशाढ्यकेशा
ऽतिपेशास्य मेशांघ्रिलेशाभिदेशादिमम् ॥९७॥

स्वनामगुणमाधुरीहृदयहारिगानामृतै-
रतीव परितर्पयन् सुजनहृच्चकोरोत्करम् ।
तमस्तिमिरसन्ततीस्तु तरयंस्त्विषा निर्भरं
शचीतनय ते मुखामृतरुचिर्मुदं प्रातु मे ॥९८॥

साधुपरमार्तिहर पद्मवररम्यकर ।
पापिचययाम्यभयनाशिदय गौर जय ॥ धीर ॥९९॥

२५। विदग्धत्रिभङ्गी ।

चरणचलनलक्ष्मीकंपिताशेषगोत्रं
भुजकरिवरशुण्डान्दोलनाधूनिताशम् ।
अमृतमदहरश्रीनामसंकीर्तनाढ्यं
जगदवतु तवैतन्नर्तनं गौरचन्द्र ॥१००॥

गंगातटवर रंगाहितनर रंगा श्रितपदकिंकरशंकर ।
पंकाकुलजनशंकाभयहर रंकात्मककलिवारणदारण ।

सन्धारितदृढ सन्धातुलशुभ गन्धाढ्य कुसुमसज्ज नमज्जन ।
संपाककुसुम शंपाधिकरुगऽलंपापहर विलक्षणलक्षण ।
धर्मोद्यतजनवर्मोपम शुभ कर्मोदय ललितालकभालक ।
विद्यावितमुदविद्यामदहर विद्याश्रितपद तामरसा मर
तन्त्वामहमिह मन्त्वायतरुग हन्त्वावृतमतिरुत्तमवित्तम ।
वन्दे शुभकर मन्दे मयि ननु शन्देवय परिचारकतारक ॥धीर॥

बाहू बिभ्रदरालवारणबुषाविस्फारविश्रान्तिदौ
वक्त्रं विस्मयवर्धनं बत विधोर्वाणीं विधूतव्यथाम् ।
व्यालोलेन विलोचनेन वलितो वासो वसानो वरं
विश्वेषां विदधातु विश्वविदितो विश्वंभरो वांछितम् ॥१०२॥

मिश्रपुरन्दरदेहजात विश्रुत सुन्दरकेलिजात ।
नन्दितसज्जन चारुशील मन्दितदुर्जनवारलील ॥धीर॥१०३

२६। मिश्रकलिका ।

त्वद्भक्तनिन्दनकरं चपलं गदाख्यं
गोपालकं समनुकंप्य समुद्दधर्थ ।
विश्वंभरातुलकृपालय हन्त तत्तद्
दोषान्वितं कथमिवेममुपेक्षसे माम् ॥१०४॥

गांगेयामलकान्ते गां गेयामलमभीष्टदां बिभ्रत् ।
दा मो दरं मम त्वं दामोदरसुहृदिह स्म किं प्रेम ॥१०५॥

जय जगदीश जगन्नाथजनन जननयनासेचक
गर्गकथितकलिमध्यसमुद्भव भर्गरचितपरिशुद्धबहुस्तव ।
स्तवनीय वनीयकभूसुपर्व पर्वपर्वक ।
भक्तिव्यक्तिप्रमथितकलिबल भक्तत्यक्तप्रणयसदृशफल ।

सर्वदोषरहित जातरूपतरूपमदेह
सुरम्यपल्लवप्रमर्दिपल्लव प्रबललोचनतापनिवारण
वारणबुषासदृशोरुयुगल जठरसुभाण्डभ्रमदखिलाण्ड ।
प्रकृष्टफलकसदृशाविशंकटकटितट विलसितसितवसनशोभित ।
सिंहमदक्षयमध्यवलित्रय श्रेणीभूतभ्रमरभ्रमर-
रोमावलिवलित रंजितयुवतिकदंबक
नन्दितसकलहृद्दंबक विशालवक्षःस्थलविराजमान-
वनमाल द्विरदोत्तमकरसमदोर्द्वयधर कमलिनी-
मलिनीकरणपटुकरयुगविद्योतमान विमलशिखर-
मणिसंचयसमनख शशधरमदपरिलुंचनपटुमुख ।
पवनाशन नाशन नासिकापुटा धराधरायित बन्धुजीव
नयनसुभंगग्लपित कुरंग प्रकाण्डकामकोदण्डदर्प-
दलनचिल्लीयुगल कचजितचन्द्रक हसजितचन्द्रक ॥देव॥१०६

भक्तलोचनचकोरतोषिका पापतापनिकुरंबमोषिका ।
अस्तु नः सुखविधावतन्द्रिका गौरचन्द्र ! तव कान्तिचन्द्रिका ॥

चरणचरण धरणिपवन गुणककथन सततकरण ॥धीर॥१०८॥

अथ वा सप्तविभक्तिकी कलिका ।

(१) यः सुरनिकरप्रार्थितवितरः
क्षीणितशोकप्रीणितलोकः ।

(२) सुमतिजना यं विदुरतिमायं
सुकृतितनुत्रं व्रजपतिपुत्रम् ।

(३) निजगुणकथनपरेण प्रणयिजनरतिधरेण
प्रमदितबुधहृदयेन क्षितिसुखमुदरचि येन ।

( ४ ) श्रीवल्लभो देववर्याय विप्रोत्तमश्चित्रचर्याय
यस्मै ददौ सद्भिरिष्टाय कन्यामलंकृत्य शिष्टाय ।

( ५ ) रुचिक्षिप्तचंपान्महिष्ठानुकंपात्
कलिश्रीरकस्मात् क्षयं प्राप यस्मात् ॥

( ६ ) श्रीवासमित्रस्य मिश्रेन्द्रपुत्रस्य
चिद्रूपकायस्य दिव्या गुणा यस्य ।

( ७ ) सति यत्र वरेऽवतरत्यजरे
भुवनं महिते सुखितं स्वहिते ।
( संबोधनम् ) स त्वं प्रभुवर विश्वं दरहर
लक्षाधिकगुण रक्षातिनिपुण ॥ देव ॥१०९॥

गौरः सच्चरितामृतामृतनिधिर्गौरं सदैव स्तुवे
गौरेण प्रथितं रहस्यभजनं गौराय सर्वं ददे ।
गौरादस्ति कृपालुरत्र न परो गौरस्य भृत्योऽभवं
गौरे गौरवमाचरामि भगवन् गौर प्रभो रक्ष माम् ॥११०॥

कीर्तनकल्पित नर्तनवल्गित बान्धवराजित मां कृपयाऽजित ॥धीर

२७। अथ केवलायां अक्षरमयी ।

गुणगणगौरवगेहं गिरिशागम्यो गभीरगीर्ग्रामः ।
गतिगंजितगजराजो गौरो गच्छतु गतित्वं मे ॥११२॥

कलिखलगर्वितघाती चतुरच्छलनाजयी झटिति ।
तारयतु दग्धधिषणं नष्टं पापाद्भयेन मां स हरिः ॥११३॥

अद्भुतगुणजय आहितकलिभय इष्टजनावक ईश्वरसेवक
उद्धतदण्डन ऊढसुमण्डन ऋजुजनसंश्रित ऋषिगणस्तुत

लृदिवश्रुतामित लृवदसाधित एजितदुर्जन ऐश्यनिकेतन
ओड्‌सदृगधर औज्ज्वल्याकर अंशुकभूषण अस्तगदूषण ।
कनकसमप्रभ खलजनदुर्लभ गणनाविरहित घनकचविलसित
ङुतिजितकोकिल चूडितविचकिल छलितकमलमद जगतीप्रियकपद
झनदितिनूपुर ञोङुयापदकर टीकननिस्तल ठजयिनखांचल
डमरुधृगीश्वर ढुण्ढ्यकृपाभर णात्मकविग्रह तत्त्वविदाग्रह
थुत्कृतमुक्तिक दरपदभक्तिक धर्महृदादर नर्मरसाकर
पद्मविजयिकर फुल्लकमलधर बन्धविमोचन भास्कररोचन
मधुरतरानन यमजयिसेवन रसभरदायक ललितविधायक
वलदनुपमदय शमितभुवनभय षड्‌भुजवीक्षक सन्मतशिक्षक
हरिगुणकथन क्षणनन्दितजन ॥ देव ॥११४॥

गौरांगोऽगणितं गतो गुणगणं गीर्वाणगोत्रो गवां
ग्लानिं गाढतमां गिलन् गृहरुचिर्गान्धारगीतेगुरुः।
गंजन् गोत्रसमं गजं गतिरुचा गांभीर्यतो गोनिधिं
गांगेयं गुरुगौरवेण गदतो गीःपद्धतिं गाहताम् ॥११५॥

श्रीराजिततर हीरांचितकर धीरावृतवर गीराद्रितनर ॥धीर॥

२८। सर्वलघुः ।

निजजनहृद्‌भ्रमरततिश्रितमरुणच्छवि सुरभि ।
ननु भवतः पदकमलं हृदि सरसि स्फुरतु मम ॥११७॥

कलिबलहुतवहहतमनुजगहन
दवहर सुखकर सुनिबिड नवघन
कनकसदृशरुचिकृतजनसुखभर
चरणकमलहृतधरणिदवथुदर ।
शशधरसमसिततनुतरवसनक ।
शिखरमणिविजयिसुमधुरदशनक ।

करिकररिपुभुजयुग नवकिशलय-
समकररुचिविलसितकनकवलय ।
वदनकमलगतनयनमदिरवर
गलधृतकनकखचितमणिसरवर
शरणसमुपगतजनसकरुणतर
मयि सकरुणदृशमनवधि सुवितर ॥ देव ॥११८॥

प्लुष्टाष्टापदजित्त्विट् स्फुटनटनश्रीः प्रकाण्डदोर्दण्डः ।
खण्डितयमदण्डदरो गौरो हृन्मण्डपं प्रमण्डयतु ॥११९॥

विमलकमलचरणयुगल शमितसकलजगदविरल ॥धीर॥१२०॥

विपुलभयदरूपे संसृतिध्वान्तकूपे
पतितमधिककष्टं कालसर्पेण दष्टम् ।
स्वचरणरसलेशं पाययित्वा सुपेशं
जनमिममतितान्तं जीवयाराद् गतान्तम् ॥१२१॥

येयं ते बिरुदावली कलिखलीकारस्य हेतुर्बली
त्वल्लीलागुणमाधुरीरणकरी संसारभीजित्वरी ।
एनां यः खलु भाषिता प्रथयिता भक्तिं गिरां वेदिता
श्रीगौरांग महाप्रभो भव शुभोल्लासाय तस्याशु भोः ॥१२२॥

गोविन्दस्य प्रकाशोऽभूद् यथा श्रीगौरसुन्दरः ।
गोविन्दबिरुदावल्यास्तथेयं बिरुदावली ॥१२३॥

येषां निदेशवशतो बिरुदावलीयं
गौरप्रभोर्विरचिता रघुनन्दनेन ।
गोवर्धनक्षितिभृदन्तिकवासिनस्ते
गृह्णन्त्विमां कृतकृपाः कृपणे महान्तः ॥१२४॥

इति श्रीरघुनन्दनगोस्वामिकृता
श्रीगौराङ्गबिरुदावली समाप्ता ।

# श्रीमङ्गलाचरणानि ।

१। श्रीमद्भागवते ।

ध्येयं सदा परिभवघ्नमभीष्टदोहं
तीर्थास्पदं शिव-विरिञ्चिनुतं शरण्यम् ।
भृत्यार्तिहं प्रणतपाल भवाब्धिपोतं
वन्दे महापुरुष ते चरणारविन्दम् ॥ १ ॥

त्यक्त्वा सुदुस्त्यज-सुरेप्सित-राज्यलक्ष्मीं
धर्मिष्ठ आर्यवचसा यदगादरण्यम् ।
मायामृगं दयितयेप्सितमन्वधावद्
वन्दे महापुरुष ते चरणारविन्दम् ॥ २ ॥

२। चैतन्यभागवते ।

आजानुलम्बितभुजौ कनकावदातौ
संकीर्तनैकपितरौ कमलायताक्षौ ।
विश्वम्भरौ द्विजवरौ युगधर्मपालौ
वन्दे जगत्प्रियकरौ करुणावतारौ ॥ ३ ॥

नमस्त्रिकालसत्याय जगन्नाथसुताय च ।
सभृत्याय सपुत्राय सकलत्राय ते नमः ॥ ४ ॥

अवतीर्णौ स्वकारुण्यौ परिच्छिन्नौ सदीश्वरौ ।
श्रीकृष्णचैतन्यनित्यानन्दौ द्वौ भ्रातरौ भजे ॥ ५ ॥

स जयति विशुद्धविक्रमः कनकाभः कमलायतेक्षणः ।
वरजानुविलम्बिषड्भुजो बहुधा भक्तिरसाभिनर्तकः ॥ ६ ॥

जयति जयति देवः कृष्णचैतन्यचन्द्रो
जयति जयति कीर्तिस्तस्य नित्या पवित्रा ।

जयति जयति भृत्यस्तस्य विश्वेशमूर्ते-
र्जयति जयति नृत्यं तस्य सर्वप्रियस्य ॥ ७ ॥

जय नवद्वीपनवप्रदीपप्रभाव पाषण्डगजैकसिंह ।
स्वनामसंख्याजपसूत्रधारि चैतन्यचन्द्र भगवन्मुरारि ॥८॥

३। हरिभक्तिविलासे ।

ब्रह्मादिशक्तिप्रदमीश्वरं तं दातुं स्वभक्तिं कृपयावतीर्णम् ।
चैतन्यदेवं शरणं प्रपद्ये यस्य प्रसादात् स्ववशेऽर्थसिद्धिः ॥

तं श्रीमत्कृष्णचैतन्यदेवं वन्दे जगद्गुरुम् ।
यस्यानुकंपया श्वापि महाब्धिं सन्तरेत् सुखम् ॥१०॥

अन्धः पश्यति शास्त्राणि शिला तरति वारिधिम् ।
यस्य प्रभावतो वन्दे तं श्रीचैतन्यमीश्वरम् ॥११॥

वन्देऽनन्ताद्भुतैश्वर्यं श्रीचैतन्यं महाप्रभुम् ।
नीचोऽपि यत्प्रसादात् स्यात् सदाचारप्रवर्तकः ॥१२॥

प्रभुः श्रीकृष्णचैतन्यो जीयात् यत्कृपया भवेत् ।
श्वापि सिंहस्तृणं मेरुर्मूर्खो विद्वान् मृतोऽसुमान् ॥१३॥

कुमनाः सुमनस्त्वं हि याति यस्य पदाब्जयोः ।
सुमनोऽर्पणमात्रेण तं चैतन्यप्रभुं भजे ॥१४॥

श्रीचैतन्यं प्रपद्ये तं महाश्चर्यप्रभावकम् ।
प्रसादे यस्य दुष्टोऽपि भगवद्भक्तिमान् भवेत् ॥१५॥

चैतन्यदेवं तं वन्दे यस्य नामसमाश्रयात् ।
प्राप्नुयादधिकारित्वं सर्वत्रानधिकार्यपि ॥१६॥

श्रीचैतन्यप्रभुं वन्दे यदाश्रयरसाप्लुतः ।
वांछातीतं फलत्येव मनोरथमहीरुहः ॥१७॥

वन्दे चैतन्यदेवं तं कृष्णं नित्यनवोत्सवम् ।
यस्य प्रसादात् सिध्यन्ति दीनस्यापि महोत्सवाः ॥१८॥

कस्माच्चिदाश्रयाद् यस्य प्रोद्यद्भक्तिविलासतः ।
दीनोऽपि रंजयेद्विश्वं तं श्रीचैतन्यमाश्रये ॥१९॥

यस्य प्रसादादज्ञोऽपि सद्यः सर्वज्ञतां व्रजेत् ।
स श्रीचैतन्यदेवो मे भगवान् संप्रसीदतु ॥२०॥

श्रीचैतन्यं प्रविष्टोऽस्मि शरणं सुष्ठु येन हि ।
आविष्टो याति दुष्टोऽपि प्रतिष्ठां सदभिष्टुताम् ॥२१॥

जीयाच्चैतन्यदेवोऽसौ यत्पादाब्जरसं स्पृशन् ।
नित्यं चित्रं फलत्येव मनोरथमहाद्रुमः ॥२२॥

कथञ्चन स्मृते यस्मिन् दुष्करं सुकरं भवेत् ।
विस्मृते विपरीतं स्यात् श्रीचैतन्यं नमामि तम् ॥२३॥

४। बृहद्भागवतामृते ।

जयति निजपदाब्जप्रेमदानावतीर्णो
विविधमधुरिमाब्धिः कोऽपि कैशोरगन्धिः ।
गतपरमदशान्तं यस्य चैतन्यरूपा-
दनुभवपदमाप्तं प्रेम गोपीषु नित्यम् ॥२४॥

नमश्चैतन्यचन्द्राय स्वनामामृतसेविने ।
यद्रूपाश्रयणाद्यस्य भेजे भक्तिमयं जनः ॥२५॥

स्वदयितनिजभावं यो विभाव्य स्वभावात्
सुमधुरमवतीर्णो भक्तरूपेण लोभात् ।
जयति कनकधामा कृष्णचैतन्यनामा
हरिरिह यतिवेशः श्रीशाचीसूनुरेषः ॥२६॥

नमः श्रीगुरुकृष्णाय निरुपाधिकृपाकृते ।
यः श्रीचैतन्यरूपोऽभूत् तन्वन् प्रेमरसं कलौ ॥२७॥

श्रीमच्चैतन्यदेवाय तस्मै भगवते नमः ।
यद्रूपमणिमाश्रित्य चित्रं नृत्यत्ययं जडः ॥२८॥

५। कृष्णलीलास्तवे ।

श्रीमच्चैतन्यदेव त्वां वन्दे गौराङ्गसुन्दर ।
शचीनन्दन मां त्राहि यतिचूडामणे प्रभो ॥२९॥

आजानुबाहो स्मेरास्य नीलाचलविभूषण ।
जगत्प्रवर्तितस्वादुभगवन्नामकीर्तन ॥३०॥

श्रीकृष्णचरणांभोजप्रेमामृतमहाम्बुधे ।
नमस्ते दीनदीनं मां कदाचित् किं स्मरिष्यसि ? ३१॥

६। बृहद्वैष्णवतोषण्याम् ।

वन्दे श्रीकृष्णचैतन्यं भगवन्तं कृपार्णवम् ।
प्रेमभक्तिवितानार्थं गौडेष्ववततार यः ॥३२॥

महाब्धिमध्ये पतितं व्याकुलं शरणागतम् ।
चैतन्यदेव भगवन् पारं प्रापय सत्वरम् ॥३३॥

७। भक्तिरसामृतसिन्धौ ।

हृदि यस्य प्रेरणया प्रवर्तितोऽहं वराकरूपोऽपि ।
तस्य हरेः पदकमलं वन्दे चैतन्यदेवस्य ॥३४॥

८। उज्ज्वलनीलमणौ ।

नामाकृष्टरसज्ञः शीलेनोद्दीपयन् सदानन्दम् ।
निजरूपोत्सवदायी सनातनात्मा प्रभुर्जयति ॥३५॥

नमः श्रीगुरुकृष्णाय निरुपाधिकृपाकृते ।
यः श्रीचैतन्यरूपोऽभूत् तन्वन् प्रेमरसं कलौ ॥२७॥

श्रीमच्चैतन्यदेवाय तस्मै भगवते नमः ।
यद्रूपमणिमाश्रित्य चित्रं नृत्यत्ययं जडः ॥२८॥

५। कृष्णलीलास्तवे ।

श्रीमच्चैतन्यदेव त्वां वन्दे गौराङ्गसुन्दर ।
शचीनन्दन मां त्राहि यतिचूडामणे प्रभो ॥२९॥

आजानुबाहो स्मेरास्य नीलाचलविभूषण ।
जगत्प्रवर्तितस्वादुभगवन्नामकीर्तन ॥३०॥

श्रीकृष्णचरणांभोजप्रेमामृतमहाम्बुधे ।
नमस्ते दीनदीनं मां कदाचित् किं स्मरिष्यसि ? ३१॥

६। बृहद्वैष्णवतोषण्याम् ।

वन्दे श्रीकृष्णचैतन्यं भगवन्तं कृपार्णवम् ।
प्रेमभक्तिवितानार्थं गौडेष्ववततार यः ॥३२॥

महाब्धिमध्ये पतितं व्याकुलं शरणागतम् ।
चैतन्यदेव भगवन् पारं प्रापय सत्वरम् ॥३३॥

७। भक्तिरसामृतसिन्धौ ।

हृदि यस्य प्रेरणया प्रवर्तितोऽहं वराकरूपोऽपि ।
तस्य हरेः पदकमलं वन्दे चैतन्यदेवस्य ॥३४॥

८। उज्ज्वलनीलमणौ ।

नामाकृष्टरसज्ञः शीलेनोद्दीपयन् सदानन्दम् ।
निजरूपोत्सवदायी सनातनात्मा प्रभुर्जयति ॥३५॥

९। ललितमाधवे ।

निजप्रणयितासुधामुदयमाप्नुवन् यः क्षितौ
किरत्यलमुरीकृतद्विजकुलाधिराजस्थितिः ।
स लुञ्चिततमस्ततिर्मम शचीसुताख्यः शशी
वशीकृतजगन्मनाः किमपि शर्म विन्यस्यतु ॥३६॥

१०। भागवतसन्दर्भे ।

अन्तःकृष्णं बहिर्गौरं दर्शिताङ्गादिवैभवम् ।
कलौ संकीर्तनाद्यैः स्मः कृष्णचैतन्यमाश्रिताः ॥३७॥

११। गोपालचम्प्वाम् ।

श्रीकृष्ण ! कृष्णचैतन्य ! ससनातनरूपक !
गोपाल ! रघुनाथाप्त ! व्रजवल्लभ ! पाहि माम् ॥३८॥

१२। माधवमहोत्सवे ।

श्रीकृष्णचैतन्यतया प्रसिद्धतां गतः शचीकुक्षि-समुद्र-संभवः ।
सद्भक्तिपीयूषनिधिः स्वदीधितिः स गौरकान्तिर्वितनोतु मद्धृदि ॥

१३। संक्षेपवैष्णवतोषण्याम् ।

वन्दे श्रीकृष्णचैतन्यमन्तर्यामिणमीश्वरम् ।
यत्प्रेरणा हि सर्वस्य कारणस्यापि कारणम् ॥४०॥

१४। मुक्ताचरिते ।

निजामुज्ज्वलितां भक्तिसुधामर्पयितुं क्षितौ ।
उदितं तं शचीगर्भव्योम्नि पूर्णं विधुं भजे ॥४१॥

१५। कृष्णभजनामृते ।

वन्दे श्रीकृष्णचैतन्यं प्राणसर्वस्वमीश्वरम् ।
सर्वावतारकारुण्यनिःसीमकरुणं प्रभुम् ॥४२॥

१६। चैतन्यमतमंजूषायाम् ।

आराध्यो भगवान् व्रजेशतनयस्तद्धाम वृन्दावनं
रम्या काचिदुपासना व्रजवधूवर्गेण या कल्पिता ।
श्रीमद्भागवतं प्रमाणममलं प्रेमा पुमर्थो महान्
श्रीचैतन्यमहाप्रभोर्मतमिदं तत्रादरो नः परः ॥४३॥

१७। चैतन्यचरितामृतमहाकाव्ये ।

यः श्रीवृन्दावनभुवि पुरा सच्चिदानन्दसान्द्रो
गौराङ्गीभिः सदृशरुचिभिः श्यामधामा ननर्त ।
तासां शश्वद्दृढतरपरीरंभसंभेदतः किं
गौराङ्गः सन् जयति स नवद्वीपमालंबमानः ॥४४॥

यस्याङ्गश्रीमधुरिमपरीणाहपीयूषसेकै-
र्भास्वच्चामीकरजलमयैः शान्तनिःशेषतापैः ।
यस्य श्रीमत्पदजलरुहान्माकरन्दप्रवाहैः
साक्षात्प्रक्षालितमिव जगच्छश्वदानम्यतां सः ॥४५॥

जानुप्रान्तप्रसृमरभुजादण्डमुच्चण्डचण्ड-
द्योतश्रेणीपटुतरमहोमण्डली-मण्डिताङ्गम् ।
आकर्णान्तःस्खलितललितापाङ्गमत्यन्तरज्य-
द्दण्डाभोगं मृगपतिशताक्रीडमानं भजामः ॥४६॥

यस्य श्रीमन्नखमणिसुधारश्मिरम्यप्रकाशै-
स्त्रैलोक्यान्तर्जटितजडिमक्षालनायोन्मिषद्भिः ।
स्वीयप्रेमांबुधिलहरिकापूरपूरेण भूयो
जाड्यं चक्रे तमिह तदहो सेव्यतां जीवलोकः ॥४७॥

स्वीयैर्लीलाविलसितरसैः पादसेवाविलासै-
र्लास्योल्लासैर्यदयमकरोत्पूर्णपूर्णां त्रिलोकीम् ।

मन्ये भूयस्तदिह करुणा सैव नित्यं नवीना
भूयो भूयः प्रणमतुतरां तामिमां जीवलोकः ॥४८॥

यत्र श्रीमन्मधुरिममयी कान्तिरेषा जगाम
व्याहारान्तं गुरुकरुणता पूर्णतामागतासीत् ।
वैदग्धीयं निखिलसुभगा हन्त निर्वाहमाप्ता
गौराङ्गस्य प्रणम तदिदं पादपाथोजयुग्मम् ॥४९॥

१८। चैतन्यचन्द्रोदये ।

निधिषु कुसुद–पद्म–शंखमुख्ये–
ष्वरुचिकरो नवभक्ति–चन्द्रकान्तैः ।
विरचित–कलिकोकशोकशंकु–
र्विषयतमांसि हिनस्तु गौरचन्द्रः ॥५०॥

१९। आनन्दवृन्दावनचम्प्वाम् ।

माधुर्यैर्मधुभिः सुगन्धि भजनस्वर्णाम्बुजानां वनं
कारुण्यामृतनिर्झरैरुपचितः सत्प्रेमहेमाचलः ।
भक्तांभोधरधोरणी विजयिनी निष्कम्पशाम्पावलि–
र्देवो नः कुलदैवतं विजयतां चैतन्यकृष्णो हरिः ॥५१॥

२०। अलङ्कारकौस्तुभे ।

स्वानन्दरससतृष्णः कृष्णश्चैतन्यविग्रहो जयति ।
आपामरमपि कृपया सुधया स्नपयांबभूव भूमौ यः ॥५२॥

२१। चैतन्यचन्द्रामृते ।

सौन्दर्ये कामकोटिः सकलजनसमाह्लादने चन्द्रकोटि-
र्वात्सल्ये मातृकोटिस्त्रिदशविटपितोऽप्यद्भुतौदार्यकोटिः ।
गाम्भीर्येऽम्भोधिकोटिर्मधुरिमणि सुधाक्षीरमाध्वीककोटि-
र्गौरो देवः स जीयात् प्रणयरसपदे दर्शिताश्चर्यकोटिः ॥५३॥

२२। राधारससुधानिधौ ।

निन्दन्तं पुलकोत्करेण विकसन्नीपप्रसूनच्छविं
ध्र्वीकृत्य भुजद्वयं हरिहरीत्युच्चैर्वदन्तं मुहुः ।
नृत्यन्तं द्रुतमश्रुनिर्झरचयैः सिञ्चन्तमुर्वीतलं
गायन्तं निजपार्षदैः परिवृतं श्रीगौरचन्द्रं नुमः ॥५४॥

स जयति गौरपयोधिर्मायावादार्कतापसन्तप्तम् ।
हृन्नभ उदशीतलयद् यो राधारससुधानिधिना ॥५५॥

२३। संगीतमाधवे ।

परमरसविभूतेर्दैवतस्यावतारं
जगति कृतरहस्यप्रेमभक्तिप्रचारम्
लवणजलधिकूले कल्पितानल्पलीलं
स्फुरदरुणदुकूलं धाम गौरं स्मरामि ॥५६॥

अस्रौघैर्मकरन्द-बिन्दुनिवहैर्निःस्यन्दिभिः सुन्दरं
नेत्रेन्दीवरमादधत्सुपुलकोत्कम्पं च बिभ्रद्वपुः ।
वाचश्चापि सगद्गदा हरिहरीत्यानन्दिनीरुद्गिरन्
प्रेमानन्दरसोत्सवं दिशतु वो देवः शचीनन्दनः ॥५७॥

२४। दशश्लोकीभाष्ये उद्धृतः ।

वन्दे तं कृष्णचैतन्यं गौरं कृष्णमपि स्वयम् ।
यो राधाभावसंलुब्धः स्वं भावं नितरां जहौ ॥५८॥

२५। चैतन्यचरितामृते ।

वन्दे गुरूनीशभक्तानीशमीशावतारकान् ।
तत्प्रकाशांश्च तच्छक्तीः कृष्णचैतन्यसंज्ञकम् ॥५९॥

वन्दे श्रीकृष्णचैतन्यनित्यानन्दौ सहोदितौ ।
गौडोदये पुष्पवन्तौ चित्रौ शंदौ तमोनुदौ ॥६०॥

यदद्वैतं ब्रह्मोपनिषदि तदप्यस्य तनुभा
य आत्मान्तर्यामी पुरुष इति सोऽस्यांशविभवः ।
षडैश्वर्यैः पूर्णो य इह भगवान् स स्वयमयं
न चैतन्यात् कृष्णाज्जगति परतत्त्वं परमिह ॥६१॥

अनर्पितचरीं चिरात् करुणयावतीर्णः कलौ
समर्पयितुमुन्नतोज्ज्वलरसां स्वभक्तिश्रियम् ।
हरिः पुरटसुन्दरद्युतिकदम्बसन्दीपितः
सदा हृदयकन्दरे स्फुरतु वः शचीनन्दनः ॥६२॥

राधाकृष्णप्रणयविकृतिर्ह्लादिनीशक्तिरस्मा-
देकात्मनावपि भुवि पुरा देहभेदं गतौ तौ ।
चैतन्याख्यं प्रकटमधुना तद्द्वयं चैक्यमाप्तं
राधाभावद्युतिसुवलितं नौमि कृष्णस्वरूपम् ॥६३॥

श्रीराधायाः प्रणयमहिमा कीदृशो वानयैवा-
स्वाद्यो येनाद्भुतमधुरिमा कीदृशो वा मदीयः ।
सौख्यं चास्या मदनुभवतः कीदृशं वेति लोभा-
त्तद्भावाढ्यः समजनि शचीगर्भसिन्धौ हरीन्दुः ॥६४॥

श्रीचैतन्यप्रभुं वन्दे बालोऽपि यदनुग्रहात् ।
तरेन्नानामतग्राहव्याप्तं सिद्धान्तसागरम् ॥६५॥

कृष्णोत्कीर्तनगाननर्तनकलापाथोजनिभ्राजिता
सद्भक्तावलिहंसचक्रमधुपश्रेणीविहारास्पदम् ।
कर्णानन्दिकलध्वनिर्वहतु मे जिह्वामरुप्राङ्गणे
श्रीचैतन्यदयानिधे तव लसल्लीलासुधास्वर्धुनी ॥६६॥

श्रीचैतन्यप्रभुं वन्दे यत्पादाश्रयवीर्यतः ।
संगृह्णात्याकरव्रातादज्ञः सिद्धान्तसन्मणीन् ॥६७॥

श्रीचैतन्यप्रसादेन तद्रूपस्य विनिर्णयम् ।
बालोऽपि कुरुते शास्त्रं दृष्ट्वा व्रजविलासिनः ॥६८॥

तं श्रीमत्कृष्णचैतन्यदेवं वन्दे जगद्गुरुम् ।
यस्यानुकंपया श्वापि महाब्धिं सन्तरेत् सुखम् ॥६९॥

कथञ्चन स्मृते यस्मिन् दुष्करं सुकरं भवेत् ।
विस्मृते विपरीतं स्यात् श्रीचैतन्यममुं भजे ॥७०॥

कृपासुधासरिद्यस्य विश्वमाप्लावयन्त्यपि ।
नीचगैव सदा भाति तं श्रीचैतन्यमाश्रये ॥७१॥

वन्दे स्वैराद्भुतेहं तं चैतन्यं यत्प्रसादतः ।
यवनाः सुमनायन्ते कृष्णनामप्रजल्पकाः ॥७२॥

यस्य प्रसादादज्ञोऽपि सद्यः सर्वज्ञतां व्रजेत् ।
स श्रीचैतन्यदेवो मे भगवान् संप्रसीदतु ॥७३॥

नौमि तं गौरचन्द्रं यः कुतर्ककर्कशाशयम् ।
सार्वभौमं सर्वभूमा भक्तिभूमानमाचरत् ॥७४॥

वैराग्य-विद्या-निजभक्तियोगशिक्षार्थमेकः पुरुषः पुराणः ।
श्रीकृष्णचैतन्यशरीरधारी कृपांबुधिर्यस्तमहं प्रपद्ये ॥७५॥

कालान्नष्टं भक्तियोगं निजं यःप्रादुष्कर्तुं कृष्णचैतन्यनामा ।
आविर्भूतस्तस्य पादारविन्दे गाढं गाढं लीयतां चित्तभृङ्गः ॥

धन्यं तं नौमि चैतन्यं वासुदेवं दयार्द्रधीः ।
नष्टकुष्ठं रूपपुष्टं भक्तितुष्टं चकार यः ॥७७॥

तं वन्दे गौरजलदं स्वस्य यो दर्शनामृतैः ।
विच्छेदावग्रहम्लान-भक्तशस्यान्यजीवयत् ॥७८॥

अत्युद्दण्डं ताण्डवं गौरचन्द्रः
कुर्वन् भक्तैः श्रीजगन्नाथगेहे ।
नानाभावालंकृताङ्गः स्वधाम्ना
चक्रे विश्वं प्रेमवन्यानिमग्नम् ॥७९॥

स जीयात् कृष्णचैतन्यः श्रीरथाग्रे ननर्त यः ।
येनासीज्जगतां चित्रं जगन्नाथोऽपि विस्मितः ॥८०॥

गच्छन् वृन्दावनं गौरो व्याघ्रेभैणखगान् वने ।
प्रेमोन्मत्तान् सहोन्नृत्यान् विदधे कृष्णजल्पिनः ॥८१॥

वृन्दावनीयां रसकेलिवार्तां
कालेन लुप्तां निजशक्तिमुत्कः ।
सञ्चार्य रूपे व्यतनोत् पुनः स
प्रभुर्विधौ प्रागिव लोकसृष्टिम् ॥८२॥

वन्देऽनन्ताद्भुतैश्वर्यं श्रीचैतन्यमहाप्रभुम् ।
नीचोऽपि यत्प्रसादात् स्याद् भक्तिशास्त्रप्रवर्तकः ॥८३॥

वन्दे श्रीकृष्णचैतन्यदेवं तं करुणार्णवम् ।
कलावप्यतिगूढेयं भक्तिर्येन प्रकाशिता ॥८४॥

चिराददत्तं निजगुप्तवित्तं स्वप्रेमनामामृतमत्युदारः ।
आपामरं यो वितताार गौरकृष्णो जनेभ्यस्तमहं प्रपद्ये ॥८५॥

पंगुं लङ्घयते शैलं मूकमावर्तयेच्छ्रुतिम् ।
यत्कृपा तमहं वन्दे कृष्णचैतन्यमीश्वरम् ॥८६॥

वैगुण्यकीटकलितः पैशुन्यव्रणपीडितः ।
दैन्यार्णवे निमग्नोऽहं चैतन्यवैद्यमाश्रये ॥८७॥

कृपागुणैर्यः कुगृहान्धकूपादुद्धृत्य भंग्या रघुनाथदासम् ।
न्यस्य स्वरूपे विदधेऽन्तरङ्गं श्रीकृष्णचैतन्यममुं प्रपद्ये ॥८८॥

श्रूयतां श्रूयतां नित्यं गीयतां गीयतां मुदा ।
चिन्त्यतां चिन्त्यतां भक्ताश्चैतन्यचरितामृतम् ॥८९॥

२६। गोविन्दलीलामृते ।

योऽज्ञानमत्तं भुवनं कृपालुरुल्लाघयन्नप्यकरोत्प्रमत्तम् ।
स्वप्रेमसंपत्सुधयाऽद्भुतेहं श्रीकृष्णचैतन्यममुं प्रपद्ये ॥९०॥

२७। अर्थरत्नालपदीपिकायाम् ।

लोकं गोप्यं स्वमधुररसं स्वादयन् योऽवतीर्णो
धन्ये गौडे व्रजपतिसुतः कृष्णचैतन्यनामा ।
आचाण्डालात् सकलजगति प्रेमभक्तेः प्रदाता
कारुण्याब्धिर्वसतु हृदि स श्रीशचीनन्दनो मे ॥९१॥

२८। माधुर्यकादम्बिन्याम् ।

हृद्वप्रे नवभक्तिशस्यविततेः सञ्जीवनी
स्वागमारंभे कामतपतुर्दोहदमनी विश्वापगोल्लासिनी ।
दूरान्मे मरुशाखिनोऽपि सरसोभावाय भूयात् प्रभु-
श्रीचैतन्यकृपानिरंकुशमहामाधुर्यकादंबिनी ॥९२॥

२९। कृष्णभावनामृते ।

श्रीकृष्णचैतन्यघनं प्रपद्ये सपद्यपध्वस्ततमःप्रपञ्चम् ।
पञ्चेषुकोट्यर्बुदकान्तिधारापरंपराप्यायितसर्वविश्वम् ॥९३॥

३०। चमत्कारचन्द्रिकायाम् ।

यत्कारुण्यं शुचिरसचमत्कारवारांनिधींस्ता-
न्नृभ्यो राधागिरिवरभृतोः स्पर्शयेत्तर्षयेन्नः ।
तस्यैवैकं पृषतमचिराल्लब्धुमाशाक्षिदानैः
सोऽव्यान्मृत्योर्दर्शनवितते: कृष्णचैतन्यरूपः ॥९४॥

३१। सारार्थदर्शिन्याम् ।

कृपासुधावृष्टिभृतः स्वभक्ति-स्ववाहिनी-खेलितजीवपक्षी ।
श्रीकृष्णचैतन्यघनः सविद्युद्गौरो मनोव्योमनि नश्चकास्तु ॥९५॥

नित्यानन्दः कृष्णचैतन्यचन्द्रोऽद्वैतः पृथ्व्यामेधयन् प्रेमसिन्धुम् ।
सन्तप्तं वै स्तेमयंश्चेतयन्मां धिन्वन् भूयात् स्वैः कृपारश्मिलेशैः ॥

कृष्णचैतन्यगौराङ्ग ! साङ्गोपाङ्गसपार्षद ! ।
निरुपाधिकृपासिन्धो ! प्रेम्णा मां परिपूरय ॥९७॥

३२। सारार्थवर्षिण्याम् ।

गौरांशुकः सत्कुमुदप्रमोदी स्वाभिख्यया गोस्तमसो निहन्ता ।
श्रीकृष्णचैतन्यसुधानिधिर्मे मनोऽधितिष्ठन् स्वरतिं करोतु ॥९८॥

३३। सुखवर्तन्याम् ।

वत्सास्वाद्य मुहुः स्वया रसनया प्रापय्य सत्काव्यतां
देयं भक्तजनेषु भाविषु सुरैर्दुष्प्राप्यमेतत्त्वया ।
इत्याज्ञापयतेव येन निदधे श्रीकर्णपूराननने
बाल्ये स्वांघ्रिदलामृतं गतिरसौ चैतन्यचन्द्रोऽस्तु नः ॥९९

३४। सुबोधिन्याम् ।

अद्वैतप्रकटीकृतो नरहरिप्रेष्ठः स्वरूपप्रियो
नित्यानन्दसखः सनातनगतिः श्रीरूपहृत्केतनः ।

लक्ष्मीप्राणपतिर्गदाधररसोल्लासी जगन्नाथभूः
सांगोपांगसपार्षदः स दयतां देवः शचीनन्दनः ॥१००॥

३५। ऐश्वर्यकादम्बिन्याम् ।

सनातनं रूपमिहोपदर्शयन्नानन्दसिन्धुं परितः प्रवर्धयन् ।
अन्तस्तमःस्तोमहरः स राजतां चैतन्यरूपो विधुरद्भुतोदयः ॥१०१॥

३६। गोविन्दभाष्यपीठके ।

यस्य श्रीमन्नामपीयूषवर्षैरासीद्विश्वं धूतपापं किलैतत् ।
स्वाविर्भावोल्लासितानन्दसिन्धुर्जीयात् स श्रीकृष्णचैतन्यचन्द्रः ॥१०२

३७। संक्षेपभागवतामृतटीप्पण्याम् ।

भक्त्याभासेनापि तोषं दधाने धर्माध्यक्षे विश्वनिस्तारिनाम्नि ।
नित्यानन्दाद्वैतचैतन्यरूपे तत्त्वे तस्मिन्नित्यमास्तां मतिर्नः ॥१०३

३८। भक्तिरत्नाकरे ।

श्रीमत्कीर्तनमङ्गलालय महामाधुर्यवारांनिधे
शश्वद्भक्तिरसप्रद प्रविलसत्–श्रीप्रेमहेमाचल ।
सर्वानर्थनिवर्तकप्रियतनो लीलाविलासास्पद
श्रीमद्गौरहरे प्रसीद जगतां भक्तैकनाथ प्रभो ॥१०४॥

३९। गीतचन्द्रोदये ।

संकीर्तनोल्लासरसाललास्यं लीलालसच्चारुचन्द्रास्यहास्यम् ।
भावामृताब्धौ परिमग्नचित्तं श्रीगौरचन्द्रं च भजामि नित्यम् ॥१०५

४०। मधुकेलिवल्ल्याम् ।

नित्यानन्दसनातनामलनवद्वीपाभिराम प्रभो
भक्तोद्दामविशालकीर्तनपराद्वैतामितानन्दद ।

राधाभावविभावितान्तरतनो श्रीरूपचिन्तामणे
लक्ष्मीप्राण गदाधरप्रिय हरे विश्वंभर त्राहि नः ॥१०६॥

४१। गौरकृष्णोदये ।

कुर्वन् सदानन्दमगोपजन्मा नाम्नैव निघ्नन्नघमप्रविष्टः ।
निर्जैर्विनास्त्रैर्हृतभूमिभारो जीयात् जगत्यद्भुतगौरकृष्णः ॥१०७
श्रीगौरचन्द्रो भवतां विधत्तां भव्यां नवद्वीपपयोधिजन्मा ।
यो नामसंकीर्तनकर्मयज्ञैरुत्सारयामास कलावधर्मम् ॥१०८

४२। कृष्णबिरुदावल्याम् ।

विज्ञायान्यदशर्म कर्मसकलं भूर्यन्तरायाकुलं
निर्णीतं निगमागमैश्च शरणं नामैकमात्रं कलौ ।
आविर्भूय पुनस्तदेव निखिलोद्धाराय योऽगापयद्
वन्दे तं करुणानिधिं प्रभुवरं चैतन्यचन्द्रं हरिम् ॥१०९॥

४३। प्रेमपत्तने ।

कृष्णं कृष्णपरिष्वंगसतृष्णं गौरसुन्दरम् ।
धन्यं कीर्तिसुतानन्यमन्यं चैतन्यमाश्रये ॥११०॥

४४। परतत्त्वगौरपादटिप्पण्याम् ।

अकारो भगवान् विष्णुः आकारो राधिका वरा ।
ऊकारः कामरूपोऽयं रेफस्तु दानमुच्यते ।
गाकारो हरिनामाख्यं गीतमित्यर्थवाचकम् ।
प्रेम्णा श्रीराधया कृष्णः संगीतं हरिनामकम् ।
यस्मै कस्मै प्रातीति स गौरो गदितो बुधैः ॥१११॥

४५। केषांचित् ।

नमोऽस्तु नामरूपाय नमोऽस्तु नामजल्पिने ।
नमोऽस्तु नामशुद्धाय नमो नाममयाय च ॥११२॥

इति श्रीमङ्गलाचरणानि समाप्तानि ।

# श्रीकुञ्जविहार्यष्टकम् (१) ।

इन्द्रनीलमणिमंजुलवर्णः फुल्लनीपकुसुमाञ्चितकर्णः ।
कृष्णलाभिरकृशोरसि हारी सुन्दरो जयति कुञ्जविहारी ॥१॥

राधिकावदनचन्द्रचकोरः सर्वबल्लववधूधृतिचौरः ।
चर्चरीचतुरताञ्चितचारीचारुतो जयति कुञ्जविहारी ॥२॥

सर्वतः प्रथितकौलिकपर्वध्वंसनेन हृतवासवगर्वः ।
गोष्ठरक्षणकृते गिरिधारी लीलया जयति कुञ्जविहारी ॥३॥

रागमण्डलविभूषितवंशीविभ्रमेण मदनोत्सवशंसी ।
स्तूयमानचरितः शुकशारीश्रेणिभिर्जयति कुञ्जविहारी ॥४॥

शातकुम्भरुचिहारिदुकूलः केकिचन्द्रकविराजितचूलः ।
नव्ययौवनलसद्व्रजनारीरञ्जनो जयति कुञ्जविहारी ॥५॥

स्थासकीकृतसुगन्धिपटीरः स्वर्णकाञ्चिपरिशोभिकटीरः ।
राधिकोन्नतपयोधरवारीकुञ्जरो जयति कुञ्जविहारी ॥६॥

गौरधातुतिलकोज्ज्वलभालः केलिचञ्चलितचम्पकमालः ।
अद्रिकन्दरगृहेष्वभिसारी सुभ्रुवां जयति कुञ्जविहारी ॥७॥

विभ्रमोच्चलदृगञ्चलनृत्यक्षिप्तगोपललनाखिलकृत्यः ।
प्रेममत्तवृषभानुकुमारीनागरो जयति कुञ्जविहारी ॥८॥

अष्टकं मधुरकुञ्जविहारिक्रीडया पठति यः किल हारि ।
स प्रयाति विलसत्परभागं तस्य पादकमलार्चनरागम् ॥९॥

इति श्रीमद्रूपगोस्वामि-विरचित-स्तवमालायां
श्रीकुञ्जविहार्यष्टकं (१) समाप्तम् ।

राधाभावविभावितान्तरतनो श्रीरूपचिन्तामणे
लक्ष्मीप्राण गदाधरप्रिय हरे विश्वंभर त्राहि नः ॥१०६॥

४१। गौरकृष्णोदये ।

कुर्वन् सदानन्दमगोपजन्मा नाम्नैव निघ्नन्नघमप्रविष्टः ।
निजैर्विनास्त्रैर्हृतभूमिभारो जीयात् जगत्यद्भुतगौरकृष्णः ॥१०७
श्रीगौरचन्द्रो भवतां विधत्तां भव्यां नवद्वीपपयोधिजन्मा ।
यो नामसंकीर्तनकर्मयज्ञैरुत्सारयामास कलावधर्मम् ॥१०८

४२। कृष्णबिरुदावल्याम् ।

विज्ञायान्यदशर्म कर्मसकलं भूर्यन्तरायाकुलं
निर्णीतं निगमागमैश्च शरणं नामैकमात्रं कलौ ।
आविर्भूय पुनस्तदेव निखिलोद्धाराय योऽगापयद्
वन्दे तं करुणानिधिं प्रभुवरं चैतन्यचन्द्रं हरिम् ॥१०९॥

४३। प्रेमपत्तने ।

कृष्णं कृष्णपरिष्वंगसतृष्णं गौरसुन्दरम् ।
धन्यं कीर्तिसुतानन्यमन्यं चैतन्यमाश्रये ॥११०॥

४४। परतत्त्वगौरपादटिप्पण्याम् ।

अकारो भगवान् विष्णुः आकारो राधिका वरा ।
ऊकारः कामरूपोऽयं रेफस्तु दानमुच्यते ।
गाकारो हरिनामाख्यं गीतमित्यर्थवाचकम् ।
प्रेम्णा श्रीराधया कृष्णः संगीतं हरिनामकम् ।
यस्मै कस्मै प्रातीति स गौरो गदितो बुधैः ॥१११॥

४५। केषांचित् ।

नमोऽस्तु नामरूपाय नमोऽस्तु नामजल्पिने ।
नमोऽस्तु नामशुद्धाय नमो नाममयाय च ॥११२॥

इति श्रीमङ्गलाचरणानि समाप्तानि ।

# श्रीकुञ्जविहार्यष्टकम् (२) ।

अविरतरतिबन्धुस्मेरताबन्धुरश्रीः
कवलित इव राधापाङ्गभङ्गीतरङ्गैः ।
मुदिरवदनचन्द्रश्चन्द्रकापीडधारी
मुदिरमधुरकान्तिर्भाति कुञ्जे विहारी ॥ १ ॥

ततसुषिरघनानां नादमानद्धभाजां
जनयति तरुणीनां मण्डले मण्डितानाम् ।
तटभुवि नटराजक्रीडया भानुपुत्र्या
विदधदतुलचारीर्भाति कुञ्जे विहारी ॥ २ ॥

शिखिनि कलितषड्जे कोकिले पञ्चमाढ्ये
स्वयमपि नववंश्योद्दामयन्ग्राममुख्यम् ।
धृतमृगमदगन्धः सुष्ठु गान्धारसंज्ञं
त्रिभुवनधृतिहारिर्भाति कुञ्जे विहारी ॥ ३ ॥

अनुपमकरशाखोपात्तराधांगुलीको
लघु लघु कुसुमानां पर्यटन्वाटिकायाम् ।
सरभसमनुगीतश्चित्रकण्ठीभिरुच्चै-
र्व्रजनवयुवतीभिर्भाति कुञ्जे विहारी ॥ ४ ॥

अहिरिपुकृतलास्ये कीचकारब्धवाद्ये
व्रजगिरितटरङ्गे भृङ्गसंगीतभाजि ।
विरचितपरिचर्यश्चित्रतौर्यत्रिकेण
स्तिमितकरणवृत्तिर्भाति कुञ्जे विहारी ॥ ५ ॥

दिशि दिशि शुकशारीमण्डलैर्गूढलीलाः
प्रकटमनुपठद्भिर्निर्मिताश्चर्यपूरः ।

तदतिरहसि वृत्तं प्रेयसीकर्णमूले
स्मितमुखमभिजल्पन्भाति कुञ्जेविहारी ॥ ६ ॥

तव चिकुरकदम्बं स्तम्भते प्रेक्ष्य केकी
नयनकमललक्ष्मीर्वन्दते कृष्णसारः ।
अलिरलमलकान्तं नौति पश्येति राधां
सुमधुरमनुशंसन्भाति कुञ्जेविहारी ॥ ७ ॥

मदनतरलबालाचक्रवालेन विष्व-
ग्विविधवरकलानां शिक्षया सेव्यमानः ।
स्खलितचिकुरवेशे स्कन्धदेशे प्रियायाः
प्रथितपृथुलबाहुर्भाति कुञ्जेविहारी ॥ ८ ॥

इदमनुपमलीलाहारि कुञ्जेविहारि-
स्मरणपदमधीते तुष्टधीरष्टकं यः ।
निजगुणवृतया श्रीराधयाराधितस्तं
नयति निजपदाब्जं कुञ्जसद्माधिराजः ॥ ९ ॥

इति श्रीमद्रूपगोस्वामि-विरचित-स्तवमालायां
श्रीकुञ्जविहार्यष्टकं (२) समाप्तम् ।

## श्रीकेशवाष्टकम् ।

नवप्रियकमञ्जरीरचितकर्णपूरश्रियं
विनिद्रतरमालतीकलितशेखरेणोज्ज्वलम् ।
दरोच्छ्वसितयूथिकाग्रथितवल्गुवैकक्षकं
व्रजे विजयिनं भजे विपिनदेशतः केशवम् ॥ १ ॥

पिशङ्गि मणिकस्तनि प्रणतशृङ्गि पिङ्गेक्षणे
मृदङ्गमुखि धूमले शबलि हंसि वंशि प्रिये ।
इति स्वसुरभीकुलं तरलमाह्वयन्तं मुदा
व्रजे विजयिनं भजे विपिनदेशतः केशवम् ॥ २ ॥

घनप्रणयमेदुरान्मधुरनर्मगोष्ठीकला-
विलासनिलयान्मिलद्विविधवेशविद्योतिनः ।
सखीनखिलसारया पथिषु हासयन्तं गिरा
व्रजे विजयिनं भजे विपिनदेशतः केशवम् ॥ ३ ॥

श्रमाम्बुकणिकावलीदरविलीढगण्डान्तरं
समूढगिरिधातुभिर्लिखितचारुपत्रांकुरम् ।
उदञ्चदलिमण्डलीद्युतिविडम्बिवक्रालकं
व्रजे विजयिनं भजे विपिनदेशतः केशवम् ॥ ४ ॥

निबद्धनवतर्णकावलिविलोकनोत्कण्ठया
नटत्खुरपुटाञ्चलैरलघुभिर्भुवं भिन्दतीम् ।
कलेन धवलाघटां लघु निवर्तयन्तं पुरो
व्रजे विजयिनं भजे विपिनदेशतः केशवम् ॥ ५ ॥

पदाङ्कततिभिर्वरां विरचयन्तमध्वश्रियं
चलत्तरलनैचिकीनिचयधूलिधूम्रस्रजम् ।
मरुल्लहरिचञ्चलीकृतदुकूलचूडाञ्चलं
व्रजे विजयिनं भजे विपिनदेशतः केशवम् ॥ ६ ॥

विलासमुरलीकलध्वनिभिरुल्लसन्मानसाः
क्षणादखिलबल्लवीः पुलकयन्तमन्तर्गृहे ।
मुहुर्विदधतं हृदि प्रमुदितां च गोष्ठेश्वरीं
व्रजे विजयिनं भजे विपिनदेशतः केशवम् ॥ ७ ॥

उपेत्य पथि सुन्दरीततिभिराभिरभ्यर्चितं
स्मितांकुरकरम्बितैर्नटदपाङ्गभङ्गीशतैः ।
स्तनस्तबकसंचरन्नयनचञ्चरीकाञ्चलं
व्रजे विजयिनं भजे विपिनदेशतः केशवम् ॥ ८ ॥

इदं निखिलबल्लवीकुलमहोत्सवोल्लासनं
क्रमेण किल यः पुमान्पठति सुष्ठु पद्याष्टकम् ।
तमुज्ज्वलधियं सदा निजपदारविन्दद्वये
रतिं ददचञ्चलां सुखयताद्विशाखासखः ॥ ९ ॥

इति श्रीमद्रूपगोस्वामि–विरचित–स्तवमालायां
श्रीकेशवाष्टकं संपूर्णम् ।

## श्रीमुकुन्दाष्टकम् ।

बलभिदुपलकान्तिद्रोहिणि श्रीमदङ्गे
घुसृणरसविलासैः सुष्ठु गान्धर्विकायाः ।
स्वमदननृपशोभां वर्धयन्देहराज्ये
प्रणयतु मम नेत्राभीष्टसिद्धिं मुकुन्दः ॥ १ ॥

उदितविधुपरार्धज्योतिरुल्लङ्घिवक्त्रो
नवतरुणिमरज्यद्बाल्यशेषातिरम्यः ।
परिषदि ललितालीं दोलयन्कुण्डलाभ्यां
प्रणयतु मम नेत्राभीष्टसिद्धिं मुकुन्दः ॥ २ ॥

कनकनिवहशोभानिन्दि पीतं नितम्बे
तदुपरि नवरक्तं वस्त्रमित्थं दधानः ।
प्रियमिव किल वर्णं रागयुक्तं प्रियायाः
प्रणयतु मम नेत्राभीष्टसिद्धिं मुकुन्दः ॥ ३ ॥

सुरभिकुसुमवृन्दैर्वासिताम्भःसमृद्धे
　　प्रियसरसि निदाघे सायमालीपरीताम् ।
मदनजनकसेकैः खेलयन्नेव राधां
　　प्रणयतु मम नेत्राभीष्टसिद्धिं मुकुन्दः ॥ ४ ॥

परिमलमिह लब्ध्वा हन्त गान्धर्विकायाः
　　पुलकिततनुरुच्चैरुन्मदस्तत्क्षणेन ।
निखिलविपिनदेशान्वासितानेव जिघ्र-
　　न्प्रणयतु मम नेत्राभीष्टसिद्धिं मुकुन्दः ॥ ५ ॥

प्रणिहितभुजदण्डः स्कन्धदेशे वराङ्ग्याः
　　स्मितविकसितगण्डे कीर्तिदाकन्यकायाः ।
मनसिजजनिसौख्यं चुम्बनेनैव तन्व-
　　न्प्रणयतु मम नेत्राभीष्टसिद्धिं मुकुन्दः ॥ ६ ॥

प्रमददनुजगोष्ठ्याः कोऽपि संवर्तवह्नि-
　　र्व्रजभुवि किल पित्रोर्मूर्तिमान्स्नेहपुञ्जः ।
प्रथमरसमहेन्द्रः श्यामलो राधिकायाः
　　प्रणयतु मम नेत्राभीष्टसिद्धिं मुकुन्दः ॥ ७ ॥

स्वकदनकथयाङ्गीकृत्य मृद्वीं विशाखां
　　कृतचटु ललितां तु प्रार्थयन्प्रौढशीलाम् ।
प्रणयविधुरराधामानविध्वंसनाय
　　प्रणयतु मम नेत्राभीष्टसिद्धिं मुकुन्दः ॥ ८ ॥

परिपठति मुकुन्दस्याष्टकं काकुभिर्यः
　　सकलविषयसङ्गात्संनियम्येन्द्रियाणि ।
व्रजनवयुवराजो दर्शयन्स्वं सराधे
　　स्वजनगणनमध्ये तं प्रियायास्तनोति ॥ ९ ॥

इति श्रीमद्रूपगोस्वामि–विरचित–स्तवमालायां श्रीमुकुन्दाष्टकं समाप्तम् ।

# श्रीव्रजनवयुवराजाष्टकम् ।

मुदिरमदमुदारं मर्दयन्नङ्गकान्त्या
वसनरुचिनिरस्ताम्भोजकिञ्जल्कशोभः ।
तरुणिमतरणीक्षाविक्लवद्बाल्यचन्द्रो
व्रजनवयुवराजः कांक्षितं मे कृषीष्ट ॥ १ ॥

पितुरनिशमगण्यप्राणनिर्मन्थनीयः
कलिततनुरिवाद्धा मातृवात्सल्यपुञ्जः ।
अनुगुणगुरुगोष्ठीदृष्टिपीयूषवर्ति-
र्व्रजनवयुवराजः कांक्षितं मे कृषीष्ट ॥ २ ॥

अखिलजगति जाग्रन्मुग्धवैदग्ध्यचर्या-
प्रथमगुरुरुदग्रस्थामविश्रामसौधः ।
अनुपमगुणराजीरञ्जिताशेषबन्धु-
र्व्रजनवयुवराजः कांक्षितं मे कृषीष्ट ॥ ३ ॥

अपि मदनपरार्धैर्दुष्करं विक्रियोर्मिं
युवतिषु निदधानो भ्रूधनुर्धूननेन ।
प्रियसहचरवर्गप्राणमीनाम्बुराशि-
र्व्रजनवयुवराजः कांक्षितं मे कृषीष्ट ॥ ४ ॥

नयनश्रृणिविनोदक्षोभितानङ्गनागो-
न्मथितगहनराधाचित्तकासारगर्भः ।
प्रणयरसमरन्दास्वादलीलाषडंघ्रि-
र्व्रजनवयुवराजः कांक्षितं मे कृषीष्ट ॥ ५ ॥

अनुपदमुदयन्त्या राधिकासङ्गसिद्ध्या
स्थगितपृथुरथाङ्गद्वन्द्वरागानुबन्धः ।

मधुरिममधुधाराधोरणीनामुदन्वा-
न्व्रजनवयुवराजः काङ्क्षितं मे कृषीष्ट ॥ ६ ॥

अलघुकुटिलराधादृष्टिदूर्वारीनिरुद्ध-
त्रिजगदपरतंत्रोद्दामचेतोगजेन्द्रः ।
सुखमुखरविशाखानर्मणा स्मेरवक्त्रो
व्रजनवयुवराजः काङ्क्षितं मे कृषीष्ट ॥ ७ ॥

त्वयि रहसि मिलन्त्यां संभ्रमन्यासभुग्ना-
प्युषसि सखि तवालीमेखला पश्य भाति ।
इति विवृतरहस्यैर्ह्रेपयन्नेव राधां
व्रजनवयुवराजः काङ्क्षितं मे कृषीष्ट ॥ ८ ॥

व्रजनवयुवराजस्याष्टकं तुष्टबुद्धिः
कलितवरविलासं यः प्रयत्नादधीते ।
परिजनगणनायां नाम तस्यानुरज्य-
न्विलिखति किल वृन्दारण्यराज्ञीरसज्ञः ॥ ९ ॥

इति श्रीमद्रूपगोस्वामि-विरचित-स्तवमालायां
श्रीव्रजनवयुवराजाष्टकं समाप्तम् ।

# श्रीकृष्णाष्टकम् (१) ।

अमित-भवदवाब्धौ दह्यमानं चिरान्मां
कथमपि कलयित्वा पूर्णकारुण्यमूर्तिः ।
निज-सहजजनान्ते स्वीचकारेश्वरो य-
स्तमिह महितरूपं कृष्णदेवं निषेवे ॥ १ ॥

निखिलजन-कुपूयं मां कृपापूर्णचेता
  निजचरणसरोजप्रान्तदेशे प्रणीय ।
निजभजनपदव्यावर्तयद् भूरिशो य-
  स्तमिह महितरूपं कृष्णदेवं निषेवे ॥ २ ॥

अशुचिमरुचिमन्तं सन्ततं भक्तियोगे
  विहितविहितमन्तुं जन्तुजाताधमञ्च ।
अकृपणकरुणाभिः पाति मां पातिनं य-
  स्तमिह महितरूपं कृष्णदेवं निषेवे ॥ ३ ॥

अतिमुनिमति-वृन्दां वृन्दका-काननीयां
  निजचरित-सुधालीं बन्धुहृत्सिन्धुपालीम् ।
विधुरिव विधुरं मां तां च संव्यञ्जयद् य-
  स्तमिह महितरूपं कृष्णदेवं निषेवे ॥ ४ ॥

स्वपद-नखरमिन्दुं तापदग्धाय दत्तो
  मुकुरमजित-भक्त्या स्वं परिष्कुर्वते च ।
अपि किमपि कमित्रे यस्तु चिन्तामणिं मे
  तमिह महितरूपं कृष्णदेवं निषेवे ॥ ५ ॥

अकृत मृतमिवामुं मां प्रसादामृतान्त-
  न्तमथ वलितबाल्यं पादपद्मावलम्बे ।
तदपि कलित-लौल्यं स्नेहदृष्टयावृतौ य-
  स्तमिह महितरूपं कृष्णदेवं निषेवे ॥ ६ ॥

अहमतिशयतप्तो यः कृपापूरित-ग्लौ-
  रहमतिमतिशीतः पाप्मनां पावको यः ।
अहमसमतमस्वान् वेदधामा स्वयं य-
  स्तमिह महितरूं कृष्णदेवं निषेवे ॥ ७ ॥

निजगुणगणदाम्ना विप्र-मुक्तान्निरुन्धे
प्रणय-विनयजालै रुध्यते तैः समन्तात् ।
अथ च विपथपन्नं त्रायते मद्विधं य-
स्तमिह महितरूपं कृष्णदेवं निषेवे ॥ ८ ॥

उभयभुवनभव्यं यः सदा मे विधाता
निधिवदपि यदीयं पादपद्मं निषेव्यम् ।
अकृपण-कृपया स्वप्रेमदः सर्वदा य-
स्तमिह महितरूपं कृष्णदेवं निषेवे ॥ ९ ॥

इति श्रीमज्जीवगोस्वामि-विरचित-माधवमहोत्सवे
श्रीकृष्णाष्टकं (१) समाप्तम् ।

## श्रीकृष्णाष्टकम् (२)

श्रियाश्लिष्टो विष्णुः स्थिरचरवपुर्वेदविषयो
धियां साक्षी शुद्धो हरिरसुरहन्ताब्जनयनः ।
गदी शंखी चक्री विमलघनमाली स्थिररुचिः
शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ॥ १ ॥

यतः सर्वं जातं वियदनिलमुख्यं जगदिदं
स्थितौ निःशेषं योऽवति निजसुखांशेन मधुहा ।
लये सर्वं स्वस्मिन् हरति कलया यस्तु स विभुः
शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ॥ २ ॥

असूनायम्यादौ यमनियममुख्यैः सुकरणै-
र्निरुध्येदं चित्तं हृदि विलयमानीय सकलम् ।
यमीड्यं पश्यन्ति प्रवरमतयो मायिनमसौ
शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ॥ ३ ॥

पृथिव्यां तिष्ठन्यो यमयति महीं वेद न धरा
यमित्यादौ वेदो वदति जगतामीशममलम् ।
नियन्तारं ध्येयं मुनिसुरनृणां मोक्षदमसौ
शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ॥ ४ ॥

महेन्द्रादिर्देवो जयति दितिजान्यस्य बलतो
न कस्य स्वातंत्र्यं क्वचिदपि कृतौ यत्कृतिमृते ।
कवित्वादेर्गर्वं परिहरति योऽसौ विजयिनः
शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ॥ ५ ॥

विना यस्य ध्यानं व्रजति पशुतां शूकरमुखां
विना यस्य ज्ञानं जनिमृतिभयं याति जनता ।
विना यस्य स्मृत्या कृमिशतजनिं याति स विभुः
शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ॥ ६ ॥

नरातङ्कोट्टङ्कः शरणशरणो भ्रान्तिहरणो
घनश्यामो वामो व्रजशिशुवयस्योऽर्जुनसखः ।
स्वयम्भूर्भूतानां जनक उचिताचारसुखदः
शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ॥ ७ ॥

यदा धर्मग्लानिर्भवति जगतां क्षोभकरणी
तदा लोकस्वामी प्रकटितवपुः सेतुधृगजः ।
सतां धाता स्वच्छो निगमगणगीतो व्रजपतिः
शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ॥ ८ ॥

इति श्रीकृष्णाष्टकं (२) संपूर्णम् ।

# श्रीकृष्णाष्टकम् (३)।

भजे व्रजैकमण्डनं समस्तपापखण्डनं
स्वभक्तचित्तरञ्जनं सदैव नन्दनन्दनम्।
सुपिच्छगुच्छमस्तकं सुनादवेणुहस्तकं
अनङ्गरङ्गसागरं नमामि कृष्णनागरम्॥ १॥

मनोजगर्वमोचनं विशाललोललोचनं
विधूतगोपशोचनं नमामि पद्मलोचनम्।
करारविन्दभूधरं स्मितावलोकसुन्दरं
महेन्द्रमानदारणं नमामि कृष्णवारणम्॥ २॥

कदम्बसूनकुण्डलं सुचारुगण्डमण्डलं
व्रजाङ्गनैकवल्लभं नमामि कृष्णदुर्लभम्।
यशोदया समोदया सगोपया सनन्दया
युतं सुखैकदायकं नमामि गोपनायकम्॥ ३॥

सदैव पादपङ्कजं मदीयमानसे निजं
दधानमुत्तमालकं नमामि नन्दबालकम्।
समस्तदोषशोषणं समस्तलोकपोषणं
समस्तगोपमानसं नमामि कृष्णलालसम्॥ ४॥

भुवो भरावतारकं भवाब्धिकर्णधारकं
यशोमतीकिशोरकं नमामि दुग्धचोरकम्।
दृगन्तक्रान्तभङ्गिनं सदासदालिसङ्गिनं
दिने दिने नवं नवं नमामि नन्दसम्भवम्॥ ५॥

गुणाकरं सुखाकरं कृपाकरं कृपावरं
सुरद्विषन्निकन्दनं नमामि गोपनन्दनम्।

नवीनगोपनागरं नवीनकेलिलम्पटं
नमामि मेघसुन्दरं तडित्प्रभालसत्पटम् ॥ ६ ॥

समस्तगोपनन्दनं हृदम्बुजैकमोहनं
नमामि कुञ्जमध्यगं प्रसन्नभानुशोभनम् ।
निकामकामदायकं दृगन्तचारुसायकं
रसालवेणुगायकं नमामि कुञ्जनायकम् ॥ ७ ॥

विदग्धगोपिकामनोमनोज्ञतल्पशायिनं
नमामि मुञ्जकानने प्रवृद्धवह्निपायिनम् ।
यदा तदा यथा तथा तथैव कृष्णसत्कथा
मया सदैव गीयतां तथा कृपा विधीयताम् ॥ ८ ॥

प्रमाणिकाष्टकद्वयं जपत्यधीत्य यः पुमान् ।
भवेत्स नन्दनन्दने भवे भवे सुभक्तिमान् ॥ ९ ॥

इति श्रीकृष्णाष्टकं (३) संपूर्णम् ।

## श्रीकृष्णचन्द्राष्टकम् ।

अम्बुदाञ्जनेन्द्रनील–निन्दि–कान्ति–डम्बरः
कुंकुमोद्यदर्क–विद्युदंशु–दिव्यदम्बरः ।
श्रीमदङ्ग–चर्चितेन्दु–पीतनाक्त–चन्दनः
स्वांघ्रिदास्यदोऽस्तु मे स बल्लवेन्द्र–नन्दनः ॥ १ ॥

गण्ड–ताण्डवाति–पण्डिताण्डजेश–कुण्डल–
श्चन्द्र–पद्मषण्ड–गर्व–खण्डनास्यमण्डलः ।
बल्लवीषु वर्धितात्म–गूढभाव–बन्धनः
स्वांघ्रिदास्यदोऽस्तु मे स बल्लवेन्द्र–नन्दनः ॥ २ ॥

नित्यनव्य–रूपवेशहार्द–केलिचेष्टितः
केलिनर्म–शर्मदायि–मित्रवृन्द–वेष्टितः ।
स्वीय–केलि–काननांशु–निर्जितेन्द्र–नन्दनः
स्वांघ्रिदास्यदोऽस्तु मे स बल्लवेन्द्र–नन्दनः ॥ ३ ॥

प्रेमहेम–मण्डितात्म–बन्धुताभिनन्दितः
क्षौणिलग्न–भाल–लोकपाल–पालि–वन्दितः ।
नित्यकालसृष्ट–विप्र–गौरवालि–वन्दनः
स्वांघ्रिदास्यदोऽस्तु मे स बल्लवेन्द्र–नन्दनः ॥ ४ ॥

लीलयेन्द्र–कालियोष्ण–कंस–वत्स–घातक–
स्तत्तदात्म–केलि–वृष्टि–पुष्ट–भक्तचातकः ।
वीर्यशील–लीलयात्म–घोषवासि–नन्दनः
स्वांघ्रिदास्यदोऽस्तु मे स बल्लवेन्द्र–नन्दनः ॥ ५ ॥

कुञ्ज–रासकेलि–सीधु–राधिकादि–तोषण–
स्तत्तदात्म–केलि–नर्म–तत्तदालि–पोषणः ।
प्रेम–शील–केलि–कीर्ति–विश्वचित्त–नन्दनः
स्वांघ्रिदास्यदोऽस्तु मे स बल्लवेन्द्र–नन्दनः ॥ ६ ॥

रासकेलि–दर्शितात्म–शुद्धभक्ति–सत्पथः
स्वीय–चित्र–रूपवेश–मन्मथालि–मन्मथः ।
गोपिकासु नेत्रकोण–भाववृन्द–गन्धनः
स्वांघ्रिदास्यदोऽस्तु मे स बल्लवेन्द्र–नन्दनः ॥ ७ ॥

पुष्पचायि–राधिकाभिमर्ष–लब्धि–तर्षितः
प्रेमवाम्य–रम्य–राधिकास्य दृष्टि–हर्षितः ।
राधिकोरसीह लेप एष हारिचन्दनः
स्वांघ्रिदास्यदोऽस्तु मे स बल्लवेन्द्र–नन्दनः ॥ ८ ॥

अष्टकेन यस्त्वनेन राधिकासुवल्लभं
संस्तवीति दर्शनेऽपि सिन्धुजादि–दुर्लभम् ।
तं युनक्ति तुष्टचित्त एष घोषकानने
राधिकाङ्ग–सङ्ग–नन्दितात्म–पादसेवने ॥ ९ ॥

इति श्रीलकृष्णदासकविराजगोस्वामि–विरचित-
गोविन्दलीलामृते श्रीकृष्णचन्द्राष्टकं संपूर्णम् ।

## श्रीगोकुलानन्दगोविन्ददेवाष्टकम् ।

कोटिकन्दर्प-सन्दर्प-विध्वंसन-,स्वीयरूपामृताप्लावितक्ष्मातल ।
भक्तलोकेक्षणं सक्षणं तर्षयन्,गोकुलानन्दगोविन्द तुभ्यं नमः ॥

यस्य सौरभ्य-सौलभ्यभाग्गोपिका,-भाग्यलेशाय लक्ष्म्यापि तप्तं तपः ।
निन्दितेन्दीवरश्रीक ! तस्मै मुहु,-र्गोकुलानन्दगोविन्द तुभ्यं नमः ॥

वंशिकाकण्ठयोर्यः स्वरस्ते सचेत्,ताल-रागादिमान् श्रुत्यनुभ्राजितः ।
का सुधा ब्रह्म किं का नु वैकुण्ठमुद् ,गोकुलानन्दगोविन्द तुभ्यं नमः ॥

यत् पदस्पर्शमाधुर्यमज्जत्कुचा,धन्यतां यान्ति गोप्यो रमातोऽप्यलम् ।
यद् यशो दुन्दुभेर्घोषणा सर्वजिद्,गोकुलानन्दगोविन्द तुभ्यं नमः ॥

यस्य फेलालवास्वादने पात्रतां,ब्रह्मरुद्रादयो यान्ति नैवान्यके ।
आधरं शीधुमेतेऽपि विन्दन्ति नो,गोकुलानन्दगोविन्द तुभ्यं नमः ॥

यस्य लीलामृतं सवथाकर्षकं,ब्रह्मसौख्यादपि स्वादु सर्वे जगुः ।
तत्प्रमाणं स्वयं व्याससूनुः शुको,-गोकुलानन्दगोविन्द तुभ्यं नमः ॥

यत् षडैश्वर्यमप्यार्यभक्तात्मनि,ध्यातमुद्यच्चमत्कारमानन्दयेत् ।
नाथ तस्मै रसांभोधये कोटिशो,-गोकुलानन्दगोविन्द तुभ्यं नमः ॥

गोकुलानन्द-गोविन्द-देवाष्टकं, यः पठेन्नित्यमुत्कण्ठितस्त्वत्पदोः ।
प्रेमसेवाप्तये सोऽचिरान्माधुरी,-सिन्धुमज्जन्मना वाञ्छितं विन्दताम्॥

इति श्रीमद्विश्वनाथचक्रवर्तिठक्कुर-विरचितं
श्रीगोकुलानन्दगोविन्ददेवाष्टकं समाप्तम् ।

## श्रीगोपालदेवाष्टकम् ।

मधुर-मृदुल-चित्तः प्रेममात्रैक-वित्तः
स्वजन-रचित-वेषः प्राप्त-शोभा-विशेषः ।
विविध-मणिमयालङ्कारवान् सर्वकालं
स्फुरतु हृदि स एव श्रील-गोपालदेवः ॥ १ ॥

निरुपम-गुण-रूपः सर्व-माधुर्य-भूपः
श्रित-तनुरुचि-दास्यः कोटिचन्द्र-स्तुतास्यः ।
अमृत-विजयि-हास्यः प्रोच्छलच्चिल्लि-लास्यः
स्फुरतु हृदि स एव श्रील-गोपालदेवः ॥ २ ॥

धृत-नव-परभागः सव्य-हस्त-स्थितागः
प्रकटित-निजकक्षः प्राप्त-लावण्यलक्षः ।
कृत-निज-जन-रक्षः प्रेमविस्तारदक्षः
स्फुरतु हृदि स एव श्रील-गोपालदेवः ॥ ३ ॥

क्रम-वलदनुराग-स्वप्रियापाङ्ग-भाग
ध्वनित-रसविलास-ज्ञान-विज्ञापि-हासः ।
स्मृत-रतिपति-यागः प्रीति-हंसी-तडागः
स्फुरतु हृदि स एव श्रील-गोपालदेवः ॥ ४ ॥

मधुरिम-भर-मग्ने भात्यसव्येऽवलग्ने
त्रिवलिरलसवत्त्वात् यस्य पुष्टानतत्वात् ।
इतरत इह तस्या मार-रेखेव रस्या
स्फुरतु हृदि स एव श्रील-गोपालदेवः ॥ ५ ॥

वहति वलितहर्षं वाहयंश्चानुवर्षं
भजति च सगणं स्वं भोजयन् योऽर्पयन् स्वम् ।
गिरि-मुकुटमणिं श्रीदामवन्मित्रता-श्रीः
स्फुरतु हृदि स एव श्रील-गोपालदेवः ॥ ६ ॥

अधिधरमनुरागं माधवेन्द्रस्य तन्वं-
स्तदमल-हृदयोत्थां प्रेमसेवां विवृण्वन् ।
प्रकटित-निजशक्त्या वल्लभाचार्य-भक्त्या
स्फुरतु हृदि स एव श्रील-गोपालदेवः ॥ ७ ॥

प्रतिदिनमधुनापि प्रेक्ष्यते सर्वदापि
प्रणय-सुरस-चर्या यस्य वर्या सपर्या ।
गणयतु कति भोगान् कः कृती तत्प्रयोगान्
स्फुरतु हृदि स एव श्रील-गोपालदेवः ॥ ८ ॥

गिरिधर-वरदेवस्याष्टकेनेममेव
स्मरति निशि दिने वा यो गृहे वा वने वा ।
अकुटिल-हृदयस्य प्रेमदत्वेन तस्य
स्फुरतु हृदि स एव श्रील-गोपालदेवः ॥ ९ ॥

इति श्रीमद्विश्वनाथचक्रवर्तिठक्कुर-विरचित-स्तवामृतलहर्यां
श्रीगोपालदेवाष्टकं संपूर्णम् ।

# श्रीगोपीनाथदेवाष्टकम् ।

आस्ये हास्यं तत्र माध्वीकमस्मिन्, वंशी तस्यां नाद-पीयूष-सिन्धुः ।
तद्वीचीभिर्मज्ज्यन् भाति गोपी,-र्गोपीनाथः पीनवक्षा गतिर्नः ॥ १ ॥

शोणोष्णीष-भ्राजि-मुक्ता-स्रजोद्यत्,-पिञ्छोत्तंस-स्पन्दनेनापि नूनम् ।
हृन्नेत्राली-वृत्तिरत्नानि-मुञ्चन् ,गोपीनाथः पीनवक्षा गतिर्नः ॥ २ ॥

बिभ्रद्वासः पीतमूरूरु-कान्त्या, श्लिष्टं भास्वत्किङ्किणीकं नितम्बे ।
सव्याभीरी-चुम्बित-प्रान्तबाहु,-र्गोपीनाथः पीनवक्षा गतिर्नः ॥ ३ ॥

गुञ्जा-मुक्ता-रत्न-गाङ्गेय-हारै,-र्माल्यैः कण्ठे लम्बमानैः क्रमेण ।
पीतोदञ्चत्-कञ्चुकेनाञ्चितः श्री,-र्गोपीनाथः पीनवक्षा गतिर्नः॥ ४ ॥

श्वेतोष्णीषः श्वेत-सुश्लोक-धौतः, सुश्वेत-स्रक् द्वित्रशः श्वेतभूषः ।
चुम्बन् शर्या-मङ्गलारात्रिके हृद् ,गोपीनाथः पीनवक्षा गतिर्नः ॥ ५ ॥

श्रीवत्स-श्री-कौस्तुभोद्भिन्नरोम्णां, वर्णैः श्रीमान् यश्चतुर्भिः सदेष्टः ।
दृष्टः प्रेम्णैवाति-धन्यैरनन्यै,-र्गोपीनाथः पीनवक्षा गतिर्नः ॥ ६ ॥

तापिञ्छः किं हेमवल्लीयुगान्तः, पार्श्वद्वन्द्वोद्द्योतिविद्युद्घनः किम
किंवा मध्ये राधयोः श्यामलेन्दु,-र्गोपीनाथः पीनवक्षा गतिर्नः ॥७॥

श्रीजाह्नव्या मूर्तिमान् प्रेमपुञ्जो,दीनानाथान् दर्शयन् स्वं प्रसीदन् ।
पुष्णन् देवालभ्य-फेला-सुधाभि,-र्गोपीनाथः पीनवक्षा गतिर्नः॥ ८ ॥

गोपीनाथस्याष्टकं तुष्टचेता,-स्तत्पादाब्ज-प्रेम-पुष्णीभविष्णुः ।
योऽधीते तन्मन्तुकोटीरपश्यन्, गोपीनाथः पीनवक्षा गतिर्नः ॥ ९ ॥

इति श्रीमद्विश्वनाथचक्रवर्तिठक्कुर–विरचित–स्तवामृतलहर्यां
श्रीगोपीनाथदेवाष्टकं संपूर्णम् ।

# श्रीगोविन्ददेवाष्टकम् ।

जाम्बूनदोष्णीष-विराजि-मुक्ता,-माला-मणि-द्योति-शिखण्डकस्य ।
भङ्ग्या नृणां लोलुपयन् दृशः श्री,-गोविन्ददेवः शरणं ममास्तु ॥१॥

कपोलयोः कुण्डल-लास्य-हास्य,-च्छविच्छटा-चुम्बितयोर्युगेन ।
संमोहयन् संभजतां धियः श्री,-गोविन्ददेवः शरणं ममास्तु ॥२॥

स्वप्रेयसी-लोचनकोण-शीधु,-प्राप्त्यै पुरोवर्त्ति जनेक्षणेन ।
भावं कमप्युद्गमयन् बुधानां, गोविन्ददेवः शरणं ममास्तु ॥३॥

वाम-प्रगण्डार्पित-गण्ड-भास्वत्,ताटङ्क-लोलालक-कान्ति-सिक्तैः ।
भ्रू-वल्गनैरुन्मदयन् कुलस्त्री,-र्गोविन्ददेवः शरणं ममास्तु ॥४॥

दूरे स्थितास्ता मुरली-निनादैः, स्वसौरभैर्मुद्रित-कर्णपालीः ।
नासारुधो द्रुद्रुत एव कर्षन्, गोविन्ददेवः शरणं ममास्तु ॥५॥

नवीन-लावण्य-भरैः क्षितौ श्री,-रूपानुरागाम्बुनिधि-प्रकाशैः ।
सतश्चमत्कारवतः प्रकुर्वन्, गोविन्ददेवः शरणं ममास्तु ॥६॥

कल्पद्रुमाधोमणिमन्दिरान्तः,-श्रीयोगपीठाम्बुरुहास्यया स्वम् ।
उपासयंस्तंत्रविदोऽपि मंत्रै,-र्गोविन्ददेवः शरणं ममास्तु ॥७॥

महाभिषेकक्षण-सर्ववासो,-ऽलंकृत्यनङ्गीकरणोच्छलन्त्या ।
सर्वाङ्ग-भासाकुलयंस्त्रिलोकीं, गोविन्ददेवः शरणं ममास्तु ॥ ८ ॥

गोविन्ददेवाष्टकमेतदुच्चैः, पठेत्तदीयांघ्रि-निविष्टधीर्यः ।
तं मज्जयन्नेव कृपाप्रवाहै,-र्गोविन्ददेवः शरणं ममास्तु ॥ ९ ॥

इति श्रीमद्विश्वनाथचक्रवर्तिठक्कुर-विरचित-स्तवामृतलहर्यां
श्रीगोविन्ददेवाष्टकं संपूर्णम् ।

# श्रीजगन्मोहनाष्टकम् ।

गुञ्जावली-वेष्ठित-चित्रपुष्प,-चूडा-वलन्मञ्जुल-नव्य-पिञ्छम् ।
गोरोचना-चारु-तमालपत्रं, वन्दे जगन्मोहनमिष्टदेवम् ॥१॥

भ्रू-वल्गनोन्मादित-गोपनारी,-कटाक्ष-बाणावलि-विद्धनेत्रम् ।
नासाग्र-राजन्मणि-चारु-मुक्तं, वन्दे जगन्मोहनमिष्टदेवम् ॥२॥

आलोल-वक्रालक-कान्तिचुम्बि,-गण्डस्थल-प्रोन्नत-चारुहास्यम् ।
वाम-प्रगण्डोच्चल-कुण्डलान्तं, वन्दे जगन्मोहनमिष्टदेवम् ॥३॥

बन्धूक-बिम्बद्युति-निन्दि-कुञ्चत्,प्रान्ताधर-भ्राजित-वेणुवक्त्रम् ।
किञ्चित्तिरश्चीन-शिरोधिभातं,वन्दे जगन्मोहनमिष्टदेवम् ॥४॥

अकुण्ठ-रेखात्रय-राजि-कण्ठ,-खेलत्स्वरालि-श्रुति-राग-राजिम् ।
वक्षः-स्फुरत्-कौस्तुभमुन्नतांसं, वन्दे जगन्मोहनमिष्टदेवम् ॥५॥

आजानुराजद्वलयाङ्गदाञ्चि,-स्मरार्गलाकार-सुवृत्तबाहुम् ।
अनर्घ-मुक्ता-मणि-पुष्प-मालं, वन्दे जगन्मोहनमिष्टदेवम् ॥६॥

श्वासैजदश्वत्थ-दलाभ-तुन्द,-मध्यस्थ-रोमावलि-रम्यरेखम् ।
पीताम्बरं मञ्जुल-किङ्किणीकं, वन्दे जगन्मोहनमिष्टदेवम् ॥७॥

व्यत्यस्त-पादं मणिनूपुराढ्यं, श्यामं त्रिभङ्गं सुरशाखि-मूले ।
श्रीराधया सार्धमुदारलीलं, वन्दे जगन्मोहनमिष्टदेवम् ॥८॥

श्रीमज्जगन्मोहनदेवमेतत्, पद्याष्टकेन स्मरतो जनस्य ।
प्रेमा भवेद्येन तदंघ्रि-साक्षात्,-सेवामृतेनैव निमज्जनं स्यात् ॥९॥

इति श्रीमद्विश्वनाथचक्रवर्तिठक्कुर-विरचित-स्तवामृतलहर्यां
श्रीजगन्मोहनाष्टकं संपूर्णम् ।

# श्रीमदनगोपालदेवाष्टकम् ।

मृदु-तलारुण्य-जित-रुचिर-दरद-प्रभं
कुलिश-कञ्जारि-दर-कलस-झष-चिह्नितम् ।
हृदि ममाधाय निजचरण-सरसीरुहं
मदनगोपाल ! निज-सदनमनुरक्ष माम् ॥ १ ॥

मुखर-मञ्जीर-नख-शिशिरकिरणावली-
विमल-मालाभिरनुपदमुदित-कान्तिभिः ।
श्रवण-नेत्र-श्वसनपथ-सुखद ! नाथ ! हे
मदनगोपाल ! निज-सदनमनुरक्ष माम् ॥ २ ॥

मणिमयोष्णीष-दर-कुटिलिमणि लोचनो-
च्चलन-चातुर्य-चित-लवणिमणि गण्डयोः ।
कनक-ताटङ्क-रुचि मधुरिमणि मज्जयन्
मदनगोपाल ! निज-सदनमनुरक्ष माम् ॥ ३ ॥

अधर-शोणिम्नि दर-हसित-सितिमार्चिते
विजित-माणिक्य-रद-किरणगण-मण्डिते ।
निहितवंशीक ! जन-दुरवगम-लील ! हे
मदनगोपाल ! निज-सदनमनुरक्ष माम् ॥ ४ ॥

पदक-हारालि-पदकटक-नटकिङ्किणी-
वलय ताटङ्क-मुख-निखिल-मणिभूषणैः ।
कलित-नव्याभ ! निज-तनुरुचि-भूषितै-
र्मदनगोपाल ! निज-सदनमनुरक्ष माम् ॥ ५ ॥

उडुप-कोटी-कदन-वदनरुचि-पल्लवै-
र्मदनकोटी-मथन-नखर-करकन्दलैः ।

द्युतरुकोटी-सदन-सदय-नयनेक्षणै-
मदनगोपाल ! निज-सदनमनुरक्ष माम् ॥ ६ ॥

कृत-नराकार-भवमुख-विबुध-सेवित !
द्युति-सुधा-सार ! पुरु-करुण ! कमपि क्षितौ ।
प्रकटयन् प्रेमभरमधिकृत-सनातनं
मदनगोपाल ! निज-सदनमनुरक्ष माम् ॥ ७ ॥

तरणिजा-तीरभुवि तरणि-कर-वारक-
प्रियक-षण्डस्थ-मणिसदन-महित-स्थिते ! ।
ललितया सार्धमनुपद-रमित ! राधया
मदनगोपाल ! निज-सदनमनुरक्ष माम् ॥ ८ ॥

मदनगोपाल ! तव सरसमिदमष्टकं
पठति यः सायमति-सरल-मतिराशु तम् ।
स्वचरणाम्भोज-रतिरस-सरसि मज्जयन्
मदनगोपाल ! निज-सदनमनुरक्ष माम् ॥ ९ ॥

इति श्रीमद्विश्वनाथचक्रवर्तिठक्कुर-विरचित-स्तवामृतलहर्यां
श्रीमदनगोपालदेवाष्टकं संपूर्णम् ।

## श्रीस्वयंभगवत्ताष्टकम् ।

स्वजन्मन्यैश्वर्यं बलमिह वधे दैत्य-वितते-
र्यशः पार्थ-त्राणे यदुपुरि महासम्पदमधात् ।
परं ज्ञानं जिष्णौ मुषलमनु वैराग्यमनु यो
भगैः षड्भिः पूर्णः स भवतु मुदे नन्दतनयः ॥ १ ॥

चतुर्बाहुत्वं यः स्वजनि-समये यो मृदशने
जगत्कोटीं कुक्ष्यन्तर-परिमितत्वं स्ववपुषः ।

दधिस्फोटे ब्रह्मण्यतनुत परानन्ततनुतां
महैश्वर्यैः पूर्णः स भवतु मुदे नन्दतनयः ॥ २ ॥

बलं बक्यां दन्तच्छदन–वरयोः केशिनि नृगे
नृपे बाह्वोरंघ्रेः फणिनि वपुषः कंस–मरुतोः ।
गिरित्रे दैत्येष्वप्यतनुत निजाख्यस्य यदतो
महौजोभिः पूर्णः स भवतु मुदे नन्दतनयः ॥ ३ ॥

असंख्याता गोप्यो व्रजभुवि महिष्यो यदुपुरे
सुताः प्रद्युम्नाद्याः सुरतरु-सुधर्मादि च धनम् ।
बहिर्द्वारि ब्रह्माद्यपि बलिवहं स्तौति यदतः
श्रियां पूरैः पूर्णः स भवतु मुदे नन्दतनयः ॥ ४ ॥

यतो दत्तो मुक्तिं रिपु–वितततये यन्नरजनि–
र्विजेता रुद्रादेरपि नत–जनाधीन इति यत् ।
सभायां द्रौपद्या वरकृदतिपूज्यो नृपमखे
यशोभिस्तत् पूर्णः स भवतु मुदे नन्दतनयः ॥ ५ ॥

न्यधाद्गीतारत्नं त्रिजगदतुलं यत् प्रियसखे
परं तत्त्वं प्रेम्णोद्धव–परमभक्ते च निगमम् ।
निज–प्राण–प्रेष्ठास्वपि रसभृतं गोपकुलजा–
स्वतो ज्ञानैः पूर्णः स भवतु मुदे नन्दतनयः ॥ ६ ॥

कृतागस्कं व्याधं सतनुमपि वैकुण्ठमनय–
न्ममत्वस्यैकाग्रानपि परिजनान् हन्त ! विजहौ ।
यदप्येते श्रुत्या ध्रुवतनुतयोक्तास्तदपि हा
स्ववैराग्यैः पूर्णः स भवतु मुदे नन्दतनयः ॥ ७ ॥

अजत्वं जन्मित्वं रतिररतितेहारहितता
सलीलत्वं व्याप्तिः परिमितिरहन्ता–ममतयोः ।

पदे त्यागात्यागावुभयमपि नित्यं सदुररी-
करोतीशः पूर्णः स भवतु मुदे नन्दतनयः ॥ ८ ॥

समुद्यत्-सन्देह-ज्वरशत-हरं भेषजवरं
जनो यः सेवेत प्रथित-भगवत्ताष्टकमिदम् ।
तदैश्वर्य-स्वादैः स्वधियमतिवेलं सरसयन्
लभेतासौ तस्य प्रिय-परिजनानुग्य-पदवीम् ॥ ९ ॥

इति श्रीमद्विश्वनाथचक्रवर्तिठक्कुर-विरचित-स्तवामृतलहर्यां
श्रीस्वयंभगवत्ताष्टकं संपूर्णम् ।

# श्रीदामोदराष्टकम् ।

नमामीश्वरं सच्चिदानन्दरूपं, लसत्कुण्डलं गोकुले भ्राजमानम् ।
यशोदाभियोलूखलाद्धावमानं, परामृष्टमत्यं ततो द्रुत्य गोप्या ॥ १

रुदन्तं मुहुर्नेत्रयुग्मं मृजन्तं, कराम्भोज-युग्मेन सातङ्कनेत्रम् ।
मुहुःश्वासकम्प-त्रिरेखाङ्ककण्ठ,-स्थित-ग्रैव-दामोदरं भक्तिबद्धम् ॥२

इतीदृक् स्वलीलाभिरानन्दकुण्डे, स्वघोषं निमज्जन्तमाख्यापयन्तम् ।
तदीयेशितज्ञेषु भक्तैर्जितत्वं, पुनः प्रेमतस्तं शतावृत्ति वन्दे ॥ ३

वरं देव ! मोक्षं न मोक्षावधिं वा, न चान्यं वृणेऽहं वरेशादपीह ।
इदन्ते वपुर्नाथ ! गोपालबालं, सदा मे मनस्याविरास्तां किमन्यैः ॥४

इदन्ते मुखाम्भोजमत्यन्तनीलै,-र्वृतं कुन्तलैः स्निग्ध-रक्तैश्च गोप्या ।
मुहुश्चुम्बितं बिम्बरक्ताधरं मे, मनस्याविरास्तामलं लक्षलाभैः ॥ ५

नमो देव दामोदरानन्त विष्णो!,प्रसीद प्रभो!दुःखजालाब्धिमग्नम् ।
कृपादृष्टि-वृष्ट्यातिदीनं बतानु, गृहाणेश ! मामज्ञमेध्यक्षिदृश्यः ॥६

कुबेरात्मजौ बद्धमूर्त्यैव यद्वत्, त्वया मोचितौ भक्तिभाजौ कृतौ च ।
तथा प्रेमभक्तिं स्वकां मे प्रयच्छ,न मोक्षे ग्रहो मेऽस्ति दामोदरेह ॥७

नमस्तेऽस्तु दाम्ने स्फुरद्दीप्तिधाम्ने,त्वदीयोदरायाथ विश्वस्य धाम्ने ।
नमो राधिकायै त्वदीय प्रियायै,नमोऽनन्तलीलाय देवाय तुभ्यम् ॥८

इति श्रीपद्मपुराणे रुक्मांगद-मोहिनी-संवादे श्रीसत्यव्रतमुनि-प्रोक्तं
श्रीदामोदराष्टकं संपूर्णम् ।

# श्रीगोविन्दाष्टकम् (१) ।

वेदैर्भेदैरनेकैः प्रकटितमहिमा पूर्णविज्ञानमूर्तिः
संसारापारसिन्धुप्रगतितमनुजैर्दुर्लभो नित्यशक्तिः ।
यो ब्रह्मादीन्समस्तान्नियमितपुरुषान्माययाक्रान्तचित्तान्
स श्रीगोविन्ददेवः सुखयतु विलसन् मां कृपापांगभंग्या ॥ १ ॥

कालिन्दीभंगसंगस्फुरितहिमगुणैः स्पर्शनैः सेव्यमाने
वृन्दारण्यान्तरंगे विहरति विविधैर्विभ्रमैर्विभ्रमैर्यः ।
प्रोद्यत्तारुण्यदेहः पशुपमृगदृशां मण्डलालिंगितांगः
स श्रीगोविन्ददेवः सुखयतु विलसन् मां कृपापांगभंग्या ॥ २ ॥

शौण्डीरं सारसानामसितरुचिभृतां मर्दयन्नंगकान्त्या
नक्षत्रेशाबुर्दानां द्युतिवलयमपि त्रासयन्नास्यरुग्भिः ।
कन्दर्पानलपदर्पं परिशमयति यश्चारुसौन्दर्यलक्ष्मीः
स श्रीगोविन्ददेवः सुखयतु विलसन् मां कृपापांगभंग्या ॥ ३ ॥

कंसाद्या दानवेन्द्रा अपि परमसुखं प्रापिता येन लोकं
शोकं दूरीकरोति प्रकटितचरितैर्योऽमराणां नराणाम् ।

कारुण्यानन्दसिन्धुर्दरकृतभजनाभासतुष्टान्तरंगः
स श्रीगोविन्ददेवः सुखयतु विलसन् मां कृपापांगभंग्या ॥ ४ ॥

कर्णालंकारधारी करकमललसत्कंकणः कंबुकण्ठे
मालां सौगन्ध्यशालां मणिगणरचितांस्तारहारान्दधानः।
मंजीरोद्धूतशब्दैर्विरसयति च यश्चारुचक्रांगनादान्
स श्रीगोविन्ददेवः सुखयतु विलसन् मां कृपापांगभंग्या ॥ ५ ॥

राधा वामांगदेशे विलसति रुचिरा यस्य लीलाकरस्य
चित्राद्याः प्राणसख्यश्चमरचयकरा भान्ति सर्वप्रदेशे।
केकापुंजे निकुंजे कुसुमसुरभिणा संस्कृते सन्निविष्टः
स श्रीगोविन्ददेवः सुखयतु विलसन् मां कृपापांगभंग्या ॥ ६ ॥

वंशीवाद्येन विद्यानिधिमपि गिरिशं मोहमग्नं करोति
शान्तानां शान्तिसिक्तं तरलयति मनो यः कलाकौतुकाढ्यः।
नन्दानन्दी यशोदाप्रणयरसवपुर्गोकुलानन्ददायी
स श्रीगोविन्ददेवः सुखयतु विलसन् मां कृपापांगभंग्या ॥ ७ ॥

गीर्वाणेशेन भक्त्या सहसुरभिसुरैः सादरं योऽभिषिक्तो
दृष्ट्वा गोवर्धनस्योद्धृतिममरकुलैर्दुर्गमां विस्मितेन।
गन्धर्वैर्गीयमानाऽमलचरितकथामंजुमाधुर्यभारः
स श्रीगोविन्ददेवः सुखयतु विलसन् मां कृपापांगभंग्या ॥ ८ ॥

श्रोत्रप्रान्ताभ्युपेतः परमपदसुखं कीर्तितः कृष्णभावं
दुर्लभ्यं यो ददाति प्रथितघनरसश्चारुविन्यस्तवर्णः।
गोविन्दानन्दलीलाखचितपदगणं विज्ञबुद्धिप्रमोदं
पद्यानां अष्टकं तं व्यरचयदमलं नन्दपूर्वः किशोरः ॥ ९ ॥

इति श्रीनन्दकिशोरगोस्वामि-विरचितं
श्रीगोविन्दाष्टकं (१) समाप्तम्।

# श्रीगोविन्दाष्टकम् (२) ।

चिदानन्दाकारं श्रुतिसरससारं समरसं
निराधाराधारं भवजलधिपारं परगुणम् ।
रमाग्रीवाहारं व्रजवनविहारं हरनुतं
सदा तं गोविन्दं परमसुखकन्दं भजत रे ॥ १ ॥

महाम्भोधिस्थानं स्थिरचरनिदानं दिविजपं
सुधाधारापानं विहगप्रतियानं यमरतम् ।
मनोज्ञं सुज्ञानं मुनिजननिधानं ध्रुवपदं
सदा तं गोविन्दं परमसुखकन्दं भजत रे ॥ २ ॥

धिया धीरैर्ध्येयं श्रवणपुटपेयं यतिवरै-
र्महावाक्यैर्ज्ञेयं त्रिभुवनविधेयं विधिपरम् ।
मनोमानामेयं सपदि हृदि नेयं नवतनुं
सदा तं गोविन्दं परमसुखकन्दं भजत रे ॥ ३ ॥

महामायाजालं विमलवनमालं मलहरं
सुभालं गोपालं निहतशिशुपालं शशिमुखम् ।
कलातीतं कालं गतिहयमरालं मुररिपुं
सदा तं गोविन्दं परमसुखकन्दं भजत रे ॥ ४ ॥

नभोबिम्बस्फीतं निगमगुणगीतं समगतिं
सुरौघे संप्रीतं दितिजविपरीतं पुरिशयम् ।
गिरां पंथातीतं स्वदितनवनीतं नयकरं
सदा तं गोविन्दं परमसुखकन्दं भजत रे ॥ ५ ॥

परेशं पद्मेशं शिवकमलजेशं शिवकरं
द्विजेशं देवेशं तनुकुटिलकेशं कलिहरम् ।

खगेशं विश्वेशं निखिलभुवनेशं जगधरं
सदा तं गोविन्दं परमसुखकन्दं भजत रे ॥ ६ ॥

रमाकान्तं कान्तं भवभयभयान्तं भवसखं
दुराशांतं शान्तं निखिलहृदि भ्रान्तं भुवनपम्।
निवादान्तं दान्तं दनुजनिचयान्तं सुचरितं
सदा तं गोविन्दं परमसुखकन्दं भजत रे ॥ ७ ॥

जगज्ज्येष्ठं श्रेष्ठं सुरपतिकनिष्ठं क्रतुपतिं
बलिष्ठं भूयिष्ठं त्रिभुवनवरिष्ठं वरवहम्।
स्वनिष्ठं धर्मिष्ठं गुरुगणगरिष्ठं गुरुवरं
सदा तं गोविन्दं परमसुखकन्दं भजत रे ॥ ८ ॥

इति श्रीगोविन्दाष्टकं (२) समाप्तम्।

## श्रीजगन्नाथाष्टकम्।

कदाचित् कालिन्दीतट-विपिन-सङ्गीत-तरलो
मुदाभीरीनारी-वदनकमलास्वाद-मधुपः।
रमा-शम्भु-ब्रह्मामरपति-गणेशार्चितपदो
जगन्नाथः स्वामी नयनपथगामी भवतु मे ॥ १ ॥

भुजे सव्ये वेणुं शिरसि शिखिपिच्छं कटितटे
दुकूलं नेत्रान्ते सहचरि-कटाक्षं विदधते।
सदा श्रीमद्वृन्दावन-वसति-लीला परिचयो
जगन्नाथः स्वामी नयनपथगामी भवतु मे ॥ २ ॥

महाम्भोधेस्तीरे कनकरुचिरे नीलशिखरे
वसन् प्रासादान्तः सहज-बलभद्रेण बलिना।

सुभद्रा-मध्यस्थः सकल-सुर-सेवावसरदो
जगन्नाथः स्वामी नयनपथगामी भवतु मे ॥ ३ ॥

कृपा-पारावारः सजल-जलद-श्रेणि-रुचिरो
रमावाणीरामः स्फुरदमल-पंकेरुहमुखः ।
सुरेन्द्रैराराध्यः श्रुतिगणशिखा-गीतचरितो
जगन्नाथः स्वामी नयनपथगामी भवतु मे ॥ ४ ॥

रथारूढो गच्छन् पथि मिलित-भूदेव-पटलैः
स्तुति-प्रादुर्भावं प्रतिपदमुपाकर्ण्य सदयः ।
दयासिन्धुर्बन्धुः सकलजगतां सिन्धुसुतया
जगन्नाथः स्वामी नयनपथगामी भवतु मे ॥ ५ ॥

परंब्रह्मापीडः कुवलय-दलोत्फुल्ल-नयनो
निवासी नीलाद्रौ निहित-चरणोऽनन्त-शिरसि ।
रसानन्दी राधा-सरस-वपुरालिङ्गन-सुखो
जगन्नाथः स्वामी नयनपथगामी भवतु मे ॥ ६ ॥

न वै याचे राज्यं न च कनक-माणिक्य-विभवं
न याचेऽहं रम्यां सकल-जन-काम्यां वरवधूम् ।
सदा काले काले प्रमथपतिना गीतचरितो
जगन्नाथः स्वामी नयनपथगामी भवतु मे ॥ ७ ॥

हर त्वं संसारं द्रुततरमसारं सुरपते
हर त्वं पापानां विततिमपरां यादवपते ।
अहो, दीनेऽनाथे निहित-चरणो निश्चितमिदं
जगन्नाथः स्वामी नयनपथगामी भवतु मे ॥ ८ ॥

जगन्नाथाष्टकं पुण्यं यः पठेत् प्रयतः शुचि ।
सर्वपाप-विशुद्धात्मा विष्णुलोकं स गच्छति ॥ ९ ॥

इति श्रीजगन्नाथाष्टकं संपूर्णम् ।

# श्रीमाधवाष्टकम् ।

यत्पादपंकजपरागपवित्रदेहाः
कुर्वन्ति सर्वकुशलं किल सर्वदेहाः ।
लोकत्रयाभरणवेणुधरः स देवः
श्रीमाधवो धवतु मानसिकं मलं मे ॥ १ ॥

कुंजे कलिन्दतनयातटसन्निधौ यः
श्रीराधिकांघ्रिकमलं ससुखं सिषेवे ।
उत्कण्ठितो विशदभावनया वृतांगः
श्रीमाधवो धवतु मानसिकं मलं मे ॥ २ ॥

आभीरनीरजदृशां नयनाभिरामो
वंशीनिनाद-निपुणोऽति-विशुद्धकामः ।
वृन्दावनेऽति मुदितो रसिकेन्द्रमौलिः
श्रीमाधवो धवतु मानसिकं मलं मे ॥ ३ ॥

पीतांबरोऽतिकुतुकी तरलांतरंगो
राधामुखांबुजमधुव्रतकर्णतुंगः ।
शोभाप्रफुल्लिततनुः समुदारहासः
श्रीमाधवो धवतु मानसिकं मलं मे ॥ ४ ॥

कन्दर्पदर्पदलनोत्सुकमण्डितांगो
रासस्थलीमधिगतो रमणीयरंगः ।
वृन्दाटवीविलसितः कमनीयकृष्णः
श्रीमाधवो धवतु मानसिकं मलं मे ॥ ५ ॥

लावण्यकेलिललनागणलालितोरः
श्रीराधिकार्चितपदः सुवयः किशोरः ।

सौन्दर्यसिन्धुरचितस्मितसुन्दरास्यः
श्रीमाधवो धवतु मानसिकं मलं मे ॥ ६ ॥

संकल्पकल्पतरुचंचलचित्तवृत्ति-
गोपीगणांगणविशिष्टकृतप्रवृत्तिः ।
नन्दात्मजोऽखिलगुणांकितचारुमूर्तिः
श्रीमाधवो धवतु मानसिकं मलं मे ॥ ७ ॥

निद्रावसानरमणीयमुखानुरागः
संसारशोकशमनाय यदंघ्रिरागः ।
संचिन्तनीयवृषभानुसुतेप्सितांगः
श्रीमाधवो धवतु मानसिकं मलं मे ॥ ८ ॥

श्रीमाधवाष्टकमिदं प्रयतः प्रभाते
गोस्वामिचन्द्ररचितं सुखदं मनुष्यः ।
श्रद्धान्वितः पठति यस्तु व्रजेन्द्रगेहे
मोक्षं लभेत सुमना अनिशं व्रजेप्सुः ॥ ९ ॥

इति श्रीगोस्वामि-चन्द्रगोपालदेवाचार्य-विरचितं
श्रीमाधवाष्टकं समाप्तम् ।

## श्रीचौराग्रगण्यपुरुषाष्टकम् ।

व्रजे प्रसिद्धं नवनीतचौरं, गोपांगनानां च दुकूलचौरम् ।
अनेक-जन्मार्जित-पापचौरं, चौराग्रगण्यं पुरुषं नमामि ॥१॥

श्रीराधिकाया हृदयस्य चौरं, नवांबुदश्यामलकान्तिचौरम् ।
पदाश्रितानां च समस्तचौरं, चौराग्रगण्यं पुरुषं नमामि ॥२॥

# श्रीमाधवाष्टकम् ।

यत्पादपंकजपरागपवित्रदेहाः
कुर्वन्ति सर्वकुशलं किल सर्वदेहाः ।
लोकत्रयाभरणवेणुधरः स देवः
श्रीमाधवो धवतु मानसिकं मलं मे ॥ १ ॥

कुंजे कलिन्दतनयातटसन्निधौ यः
श्रीराधिकांघ्रिकमलं ससुखं सिषेवे ।
उत्कण्ठितो विशदभावनया वृतांगः
श्रीमाधवो धवतु मानसिकं मलं मे ॥ २ ॥

आभीरनीरजदृशां नयनाभिरामो
वंशीनिनाद-निपुणोऽति-विशुद्धकामः ।
वृन्दावनेऽति मुदितो रसिकेन्द्रमौलिः
श्रीमाधवो धवतु मानसिकं मलं मे ॥ ३ ॥

पीतांबरोऽतिकुतुकी तरलांतरंगो
राधामुखांबुजमधुव्रतकर्णतुंगः ।
शोभाप्रफुल्लिततनुः समुदारहासः
श्रीमाधवो धवतु मानसिकं मलं मे ॥ ४ ॥

कन्दर्पदर्पदलनोत्सुकमण्डितांगो
रासस्थलीमधिगतो रमणीयरंगः ।
वृन्दाटवीविलसितः कमनीयकृष्णः
श्रीमाधवो धवतु मानसिकं मलं मे ॥ ५ ॥

लावण्यकेलिललनागणलालितोरः
श्रीराधिकार्चितपदः सुवयः किशोरः ।

सौन्दर्यसिन्धुरचितस्मितसुन्दरास्यः
श्रीमाधवो धवतु मानसिकं मलं मे ॥ ६ ॥

संकल्पकल्पतरुचंचलचित्तवृत्ति-
गोपीगणांगणविशिष्टकृतप्रवृत्तिः ।
नन्दात्मजोऽखिलगुणांकितचारुमूर्तिः
श्रीमाधवो धवतु मानसिकं मलं मे ॥ ७ ॥

निद्रावसानरमणीयमुखानुरागः
संसारशोकशमनाय यदंघ्रिरागः ।
संचिन्तनीयवृषभानुसुतेप्सितांगः
श्रीमाधवो धवतु मानसिकं मलं मे ॥ ८ ॥

श्रीमाधवाष्टकमिदं प्रयतः प्रभाते
गोस्वामिचन्द्ररचितं सुखदं मनुष्यः ।
श्रद्धान्वितः पठति यस्तु व्रजेन्द्रगेहे
मोक्षं लभेत सुमना अनिशं व्रजेप्सुः ॥ ९ ॥

इति श्रीगोस्वामि-चन्द्रगोपालदेवाचार्य-विरचितं
श्रीमाधवाष्टकं समाप्तम् ।

# श्रीचौराग्रगण्यपुरुषाष्टकम् ।

व्रजे प्रसिद्धं नवनीतचौरं, गोपांगनानां च दुकूलचौरम् ।
अनेक-जन्मार्जित-पापचौरं, चौराग्रगण्यं पुरुषं नमामि ॥१॥

श्रीराधिकाया हृदयस्य चौरं, नवांबुदश्यामलकान्तिचौरम् ।
पदाश्रितानां च समस्तचौरं, चौराग्रगण्यं पुरुषं नमामि ॥२॥

अकिञ्चनीकृत्य पदाश्रितं यः, करोति भिक्षुं पथि गेहहीनम् ।
केनाप्यहो भीषणचौर ईदृग्, दृष्टः श्रुतो वा न जगत्त्रयेऽपि ॥३॥

यदीय नामापि हरत्यशेषं, गिरि प्रसारानपि पापराशीन् ।
आश्चर्यरूपो ननु चौर ईदृग्, दृष्टः श्रुतो वा न मया कदापि ॥४॥

धनं च मानं च तथेन्द्रियाणि, प्राणांश्च हृत्वा मम सर्वमेव ।
पलायसे कुत्र धृतोऽद्य चौर, त्वं भक्तिदाम्नासि मया निरुद्धः ॥५॥

छिनत्सि घोरं यमपाशबन्धं, भिनत्सि भीमं भवपाशबन्धम् ।
छिनत्सि सर्वस्य समस्तबन्धं, नैवात्मनो भक्तकृतं तु बन्धम् ॥६॥

मन्मानसे तामसराशिघोरे, कारागृहे दुःखमये निबद्धः ।
लभस्व हे चौर ! हरे ! चिराय, स्वचौर्यदोषोचितमेव दण्डम् ॥७॥

कारागृहे वस सदा हृदये मदीये
मद्भक्तिपाशदृढबन्धननिश्चलः सन् ।
त्वां कृष्ण हे ! प्रलयकोटिशतान्तरेऽपि
सर्वस्वचौर हृदयान्नहि मोचयामि ॥ ८ ॥

इति श्रीचौराग्रगण्यपुरुषाष्टकं समाप्तम् ।

## श्रीचौराष्टकम् ।

आदौ बकीप्राणमलौघचौरं, बाल्ये प्रसिद्धं नवनीतचौरम् ।
व्रजे चरन्तं च मृदो हि चौरं, चौराधिपं कृष्णमहं नमामि ॥१॥

विधेः सुरेन्द्रस्य च गर्वचौरं, गोगोपगोपीजनचित्तचौरम् ।
श्रीराधिकाया हृदयस्य चौरं, चौराधिपं कृष्णमहं नमामि ॥२॥

नागाधिराजस्य विषस्य चौरं. श्रीसूर्यकन्याखिलकष्टचौरम् ।
गोपीजनाज्ञान-दुकूल-चौरं, चौराधिपं कृष्णमहं नमामि ॥३॥

वत्सासुरादेर्बलमान-चौरं, पित्रोस्तथाबन्धनदुःखचौरम् ।
कुब्जार्चनव्याज-मनोज-चौरं, चौराधिपं कृष्णमहं नमामि ॥४॥

निशाचराणामथ जीवचौरं, जीवात्मनः कल्मषसंवचौरम् ।
उपासकानां च विपत्तिचौरं, चौराधिपं कृष्णमहं नमामि ॥५॥

सुहृत्सुदाम्नोह्यधनत्वचौरं, शोकस्य गत्वा विदुरस्य चौरम् ।
कृष्णापटाकर्षकगर्वचौरं, चौराधिपं कृष्णमहं नमामि ॥६॥

युद्धे हि पार्थस्य विमोहचौरं, पुरःस्थितानां च बलस्य चौरम् ।
दिने च मायाबलसूर्य-चौरं, चौराधिपं कृष्णमहं नमामि ॥७॥

चित्तस्य शीलस्य जनस्य चौरं, अनेकजन्मार्जितपापचौरम् ।
दास्यं गतानां च समस्त-चौरं, चौराधिपं कृष्णमहं नमामि ॥८॥

इति श्रीचौराष्टकं संपूर्णम् ।

## श्रीनन्दनन्दनाष्टकम् ।

सुचारु-वक्त्रमण्डलं सुकर्ण-रत्नकुण्डलम् ।
सुचर्चिताङ्ग-चन्दनं नमामि नन्दनन्दनम् ॥ १ ॥

सुदीर्घ-नेत्रपङ्कजं शिखि-शिखण्ड-मूर्धजम् ।
अनङ्गकोटि-मोहनं नमामि नन्दनन्दनम् ॥ २ ॥

सुनासिकाग्र-मौक्तिकं स्वच्छन्द दन्तपंक्तिकम् ।
नवाम्बुदाङ्ग-चिक्कणं नमामि नन्दनन्दनम् ॥ ३ ॥

करेण वेणुरञ्जितं गती–करीन्द्रगञ्जितम् ।
दुकूल–पीत–शोभनं नमामि नन्दनन्दनम् ॥ ४ ॥

त्रिभङ्ग–देह–सुन्दरं नखद्युति–सुधाकरम् ।
अमूल्य रत्न–भूषणं नमामि नन्दनन्दनम् ॥ ५ ॥

सुगन्ध–अङ्गसौरभमुरोविराजि–कौस्तुभम् ।
स्फुरच्छ्रीवत्सलाञ्छनं नमामि नन्दनन्दनम् ॥ ६ ॥

वृन्दावन–सुनागरं विलासानुग–वाससम् ।
सुरेन्द्रगर्व–मोचनं नमामि नन्दनन्दनम् ॥ ७ ॥

व्रजाङ्गना–सुनायकं सदा सुख–प्रदायकम् ।
जगन्मनः–प्रलोभनं नमामि नन्दनन्दनम् ॥ ८ ॥

श्रीनन्दनन्दनाष्टकं पठेद् यः श्रद्धयान्वितः ।
तरेद्भवाब्धिं दुस्तरं लभेत्तदंघ्रियुग्मकम् ॥ ९ ॥

इति श्रीनन्दनन्दनाष्टकं संपूर्णम् ।

# श्रीबिन्दुमाधवाष्टकम् ।

कलिन्दजातटाटवीलतानिकेतनान्तर-
प्रगल्भबल्लविस्फुरद्रतिप्रसंगसंगतम् ।
सुधारसार्द्र–वेणुनादमोदमाधुरीमद-
प्रमत्तगोपगोव्रजं भजामि बिन्दुमाधवम् ॥ १ ॥

गदारिशंखचक्रशाङ्गभृच्चतुष्करं कृपा-
कटाक्षवीक्षणामृतोक्षितामरेन्द्रनन्दनम् ।

सनन्दनादिमौनिमानसारविन्दमन्दिरं
जगत्पवित्रकीर्तिदं भजामि बिन्दुमाधवम् ॥ २ ॥

दिगीशमौलिनूत्नरत्ननिःसरत्प्रभावली-
विराजितांघ्रिपंकजं नतेन्दुशेखराब्जजम् ।
दयामरन्दतुन्दिलारविन्दपत्रलोचनं
विरोधियूथभेदनं भजामि बिन्दुमाधवम् ॥ ३ ॥

पयः पयोधिवीचिकावलीपयःप्रृषन्मिलद्-
भुजंगपुंगवांगकल्पपुष्पतल्पशायिनम् ।
कटीतटिस्फुटीभवत्प्रतप्तहाटकाम्बरं
निशाटकोटिपाटनं भजामि बिन्दुमाधवम् ॥ ४ ॥

अनुश्रवापहारकावलेपलोपनैपुणो-
पयश्चरावतारतोषितारविन्दसम्भवम् ।
महाभवाब्धिमध्यमग्नदीनलोकतारकं
विहंगराट्तुरंगमं भजामि बिन्दुमाधवम् ॥ ५ ॥

समुद्रतोयमध्यदेवदानवोत्क्षिपद्धरा-
धरेन्द्रमूलधारणक्षमादिकूर्मविग्रहम् ।
दुराग्रहावलिप्तहाटकाक्षनाशशूकरं
हिरण्यदानवान्तकं भजामि बिन्दुमाधवम् ॥ ६ ॥

विरोचनात्मसंभवोत्तमाङ्गकृत्पदक्रमं
परश्वधोपसंहताखिलावनीशमण्डलम् ।
कठोरनीलकण्ठकामुकप्रदर्शितादिदो-
र्बलान्वितक्षितीसुतं भजामि बिन्दुमाधवम् ॥ ७ ॥

यमानुजोदकप्रवाहसत्वराभिजित्वरं
पुरासुरांगनाभिमानभञ्जितोपनायकम् ।

स्वमण्डलाग्रखण्डनीययावनारिमण्डलं
बलानुजं गदाग्रजं भजामि बिन्दुमाधवम् ॥ ८ ॥

प्रशस्तपंचचामराख्यवृत्तभेदभासितं
दशावतारवर्णनं नृसिंहभक्तवर्णितम् ।
प्रसिद्धबिन्दुमाधवाष्टकं पठन्ति ये नराः
सुदुर्लभं भजन्ति ते मनोरथं निरन्तरम् ॥ ९ ॥

इति श्रीबिन्दुमाधवाष्टकं संपूर्णम् ।

## श्रीभगवन्नामाष्टकम् ।

मधुरं मधुरेभ्योऽपि मंगलेभ्योऽपि मंगलम् ।
पावनं पावनेभ्योऽपि हरेर्नामैव केवलम् ॥ १ ॥

आब्रह्मस्तम्बपर्यन्तं सर्वं मायामयं जगत् ।
सत्यं सत्यं पुनः सत्यं हरेर्नामैव केवलम् ॥ २ ॥

स गुरुः स पिता चापि सा माता बान्धवोऽपि सः ।
शिक्षयेच्चेत्सदा स्मतुं हरेर्नामैव केवलम् ॥ ३ ॥

निःश्वासे न हि विश्वासः कदा रुद्धो भविष्यति ।
कीर्तनीयमतो बाल्याद्धरेर्नामैव केवलम् ॥ ४ ॥

हरिः सदा वसेत्तत्र यत्र भागवता जनाः ।
गायन्ति भक्तिभावेन हरेर्नामैव केवलम् ॥ ५ ॥

अहो दुःखं महादुःखं दुःखाद् दुःखतरं यतः ।
काचार्थं विस्मृतं रत्नं हरेर्नामैव केवलम् ॥ ६ ॥

दीयतां दीयतां कर्णो नीयतां नीयतां वचः ।
गीयतां गीयतां नित्यं हरेर्नामैव केवलम् ॥ ७ ॥

तृणीकृत्य जगत्सर्वं राजते सकलोपरि ।
चिदानन्दमयं शुद्धं हरेर्नामैव केवलम् ॥ ८ ॥

इति श्रीभगवन्नामाष्टकं संपूर्णम् ।

# श्रीहरिनामाष्टकम् ।

श्रीकेशवाच्युत मुकुन्द रथांगपाणे
गोविन्द माधव जनार्दन दानवारे ।
नारायणामरपते त्रिजगन्निवास
जिह्वे जपेति सततं मधुराक्षराणि ॥ १ ॥

श्रीदेवदेव मधुसूदन शार्ङ्गपाणे
दामोदरार्णव–निकेतन कैटभारे ।
विश्वंभराभरणभूषितभूमिपाल
जिह्वे जपेति सततं मधुराक्षराणि ॥ २ ॥

श्रीपद्मलोचन गदाधर पद्मनाभ
पद्मेश पद्मपद पावन पद्मपाणे ।
पीतांबरांबररुचे रुचिरावतार
जिह्वे जपेति सततं मधुराक्षराणि ॥ ३ ॥

श्रीकान्त कौस्तुभधरार्तहराब्जपाणे
विष्णो त्रिविक्रम महीधर धर्मसेतो ।
वैकुण्ठवास वसुधाधिप वासुदेव
जिह्वे जपेति सततं मधुराक्षराणि ॥ ४ ॥

श्रीनारसिंह नरकान्तक कान्तमूर्ते
　　लक्ष्मीपते गरुडवाहन शेषशायिन् ।
केशिप्रणाशन सुकेश किरीटमौले
　　जिह्वे जपेति सततं मधुराक्षराणि ॥ ५ ॥

श्रीवत्सलांछन सुरर्षभ शंखपाणे
　　कल्पान्त-वारिधि-विहार हरे मुरारे ।
यज्ञेश यज्ञमय यज्ञभुगादिदेव
　　जिह्वे जपेति सततं मधुराक्षराणि ॥ ६ ॥

श्रीराम रावणरिपो रघुवंशकेतो
　　सीतापते दशरथात्मज राजसिंह ।
सुग्रीवमित्र मृगवेधनचापपाणे
　　जिह्वे जपेति सततं मधुराक्षराणि ॥ ७ ॥

श्रीकृष्ण वृष्णिवर यादव राधिकेश
　　गोवर्धनोद्धरण कंसविनाश शौरे ।
गोपाल वेणुधर पाण्डुसुतैकबन्धो
　　जिह्वे जपेति सततं मधुराक्षराणि ॥ ८ ॥

इत्यष्टकं भगवतः सततं नरो यो
　　नामांकितं पठति नित्यमनन्यचेताः ।
विष्णोः परं पदमुपैति पुनर्न जातु
　　मातुः पयोधररसं पिबतीह सत्यम् ॥ ९ ॥

इति श्रीहरिनामाष्टकं संपूर्णम् ।